कविकुलगुरू कालिदास संस्कृत विश्वविद्यालय रामटेक

हस्तलिखित संग्रह

दाखल.क्र M-2874 विषय वेदांग

नाव शारिरकसुत्रभाष्य रत्न

लेखक/लिपीकार प्रभामा चतुर्थअध्याय

पृष्ठ 32 काळ ........ पुर्ण/अपुर्ण

॥श्रीकृष्णानंदसमसमर्थ॥

अथशारीरकसूत्रभाष्येरत्नप्रभायांचतुर्थाध्यायस्यप्रथमपादःप्रारम्भः

शा॰भा॰ टी॰ र॰प्र॰ ३८५

श्रीगणेशाय नमः॥ यज्ज्ञानाज्जीवतो मुक्तिरुक्तान्तिगतिवर्जिता॥ लभ्यते तत्परं ब्रह्म रामनामास्मि निर्भयं॥ ॐ आवृत्तिरसकृदुपदेशात्॥ साधनं निरूप्य फलं निरूप्यत इत्यध्याययोर्हेतुफलभावं संगतिमाह तृतीय इति फलप्रसंगेनोत्क्रान्तिरर्चिरादिमार्गश्च विचार्यत इत्याह प्रसंगेनेति पूर्वं सा साक्षादेव श्रुत्युक्तं। संन्यासादि साधनं चिंतितं संप्रति फलाध्यायं प्रतिगम्य मावृत्त्यादिकमधाःश्लेषाधिकरणात्प्राक् चिंत्यते ततः आरभ्य जीवन्मुक्तिस्ततो द्वितीयपादे उत्क्रान्तिस्तृतीये अर्चिरादिमार्गस्य गंतव्यस्य च निर्णयश्चतुर्थे ज्ञानोपासनयोः फलनिर्णय इति पादार्थविवेकः॥ आद्याधिकरणस्य श्रवणादि साधनं विषयमनूद्य

अ॰पा॰ ४।१

॥श्रीगणेशाय नमः॥ आवृत्तिरसकृदुपदेशात्॥ १॥ तृतीयेऽध्याये परापरासु विद्यासु साधनाश्रयो विचारः प्रायेणात्यगात् अथेह चतुर्थे फलाश्रय आगमिष्यति॥ प्रसंगागतं चान्यदपि किंचिच्चिन्तयिष्यते॥ प्रथमं तावत्कतिभिश्चिदधिकरणैः साधनाश्रयविचारशेषमेवानुसरामः॥ आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत सोऽन्वेष्टव्यः स विजिज्ञासितव्य इति चैवमादिश्रवणेषु संशयः॥ किं सकृत्प्रत्ययः कर्तव्यः आहोस्विदावृत्त्येति॥ किं तावत्प्राप्तं सकृत्प्रत्ययः स्यात् प्रयाजादिवत्॥ तावता शास्त्रस्य कृतार्थत्वात् अश्रूयमाणायां ह्यावृत्तौ क्रियमाणायामशास्त्रार्थः कृतो भवेत् ननु सकृदुपदेशा उदाहृताः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्येवमादयः॥ एवमपि यावच्छब्दमावर्तयेत् सकृच्छ्रवणं सकृन्मननं सकृन्निदिध्यासनं चेति नातिरिक्तं॥ सकृदुपदेशेषु तु वेदोपासीतेत्येवमादिष्वनावृत्तिरित्येवं प्राप्ते ब्रूमः॥ प्रत्ययावृत्तिः कर्तव्या कुतः॥ असकृदुपदेशात्॥ श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्येवंजातीयको ह्यसकृदुपदेशः प्रत्ययावृत्तिं सूचयति॥ ननूक्तं यावच्छब्द

द्विधानुष्ठानदर्शनात्संशयमाह॥ आत्मा वा इति॥ श्रौतात्मधीसाधनफलविचारात्मकत्वात्सर्वाधिकरणानां श्रुतिशास्त्राध्यायसंगतयः उक्तास्तत्र पदार्थसंबंधानन्तरं संगतिः मोक्षे विशेषाभावश्चच्छ्रवणादावावृत्तिविशेषो नास्तीति दृष्टान्तलक्षणावान्तरसंगत्या पूर्वपक्षमाह॥ किं तावदिति॥ अत्र पूर्वपक्षे श्रवणादेः प्रयाजवददृष्टार्थत्वात्सकृदनुष्ठानं फलसिद्धान्ते त्ववघातवद्दृष्टार्थत्वादायावत्फलमावृत्तिरिति भेदः॥ असकृदुपदेशान्यथानुपपत्त्या साधनावृत्तौ शास्त्रस्य तात्पर्यमिति निशंकते॥ ननु सकृदिति॥ श्रवणादीनां समुच्चयसिद्ध्यर्थत्वेनासकृदुक्तेरन्यथोपपत्तेर्नावृत्तौ तात्पर्यमित्या

३८५

यद्यप्यसकृदुपदेश आवृत्तिसमुच्चययोरन्यतरसूचकत्वेनान्यथासिद्धस्तथापि दृष्टे संभवत्यदृष्टमात्रकल्पनानुपपत्तेः श्रवणादेरावृत्ति-
द्वारा साक्षात्कारफलस्य षड्जादौ दृष्टत्वात् सकृदुक्तिरावृत्तिं सूचयति दृष्टार्थत्वादिति न्यायानुग्रहादित्याह ॥ तद्दर्शनपर्यवसानत्वादिति ॥ ध्यानस्य
त्वावृत्तेर्वेदोपासीतेति शब्दोक्तत्वान्न केवलार्थिकत्वमित्याह ॥ अपि चेति ॥ अस्तूपास्ति शब्दस्यावृत्तिवाचित्वं तथापि वेदेति शब्दोक्तवेदनेष्वहग्र-
हेषु कथमावृत्तिसिद्धिरित्यत आह ॥ विद्युपास्त्योश्चेति ॥ शब्दयोरेकार्थत्वमुदाहरति ॥ क्वचिदिति ॥ सर्वैकोपदेहत्वाणनत्वेरैकार्थ्योपि यः

तद्दर्शनपर्यवसितत्वाच्चैषां ॥ दर्शनपर्यवसानानि हि श्रवणादीन्यावर्त्यमानानि दृष्टार्थानि भवंति ॥ यथावघातादीनि तंदुलादि-
निष्पत्तिपर्यवसानानि तद्वत् ॥ अपि चोपासनं निदिध्यासनं चेत्यंतर्णीताऽवृत्तिगुणैव क्रियाभिधीयते ॥ तथा हि लोके गुरुमुपास्ते
राजानमुपास्त इति च यस्तात्पर्येण गुर्वादीननुवर्तते स एवमुच्यते ॥ तथा ध्यायति प्रोषितनाथा पतिमिति या निरंतरस्मरणा प-
तिं प्रति सोत्कंठा सैवमभिधीयते ॥ विद्युपास्त्योश्च वेदांतेष्वव्यतिरेकेण प्रयोगो दृश्यते ॥ क्वचिद्विदिनोपक्रम्योपासिनोपसंह-
रति ॥ यथा यस्तद्वेद यत्स वेद स मयैतदुक्त इत्यत्रानु म एतां भगवो देवतां शाधि यां देवतामुपास्स इति ॥ क्वचिच्चोपासिनोप-
क्रम्य विदिनोपसंहरति ॥ यथा मनो ब्रह्मेत्युपासीतेत्यत्र भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेदेति ॥ तस्मा-
त्सकृदुपदेशेष्वप्यावृत्तिसिद्धिरसकृदुपदेशस्त्वावृत्तेः सूचकः ॥ १ ॥ लिंगाच्च ॥ २ ॥ लिंगमपि प्रत्ययावृत्तिं प्रत्याययति ॥ तथा
ह्युद्गीथविज्ञानं प्रस्तुत्यादित्य उद्गीथ इत्येतदेकपुत्रतादोषेणापोद्य रश्मींस्त्वं पर्यावर्तयादिति रश्मिबहुत्वविज्ञानं बहुपुत्रतायै वि-
दधत्सिद्धवत्प्रत्ययावृत्तिं दर्शयति तस्मात्तत्सामान्यात्सर्वप्रत्ययेष्वावृत्तिसिद्धिः ॥ ९ ॥ कश्चिद्वेदनत्फले सर्वमंतर्भवतीत्येतदुक्तं इत्थं

मयोत्कृष्टत्वेन सर्वैक्य उक्त इति हंसप्रतिहंसान्तरवचनं तच्छ्रुत्वा रैक्वं गत्वा याचजानश्रुतिः ॥ हे भगव एतां रैक्व विदितां देवतां मे अनुशाधि मह्यमुपदिशे-
त्यर्थः ॥ एवं सगुणनिर्गुणसाक्षात्कारसाधनध्यानस्यावृत्तिः श्रौताचार्यसिद्धा तद्दृष्टार्थत्वाच्छ्रवणमननयोस्त्वसकृदुपदेशादर्थसिद्धैवावृत्तिरिति
विशेषः ॥ १ ॥ आदित्यस्यैकस्यैवोद्गीथे संपाद्योपासनात्ममत्वमेक एव पुत्रोऽसीति कौषीतकिः पुत्रमुवाचातस्त्वं तथा माकृथाः किंतु बहून् रश्मीनादित्यं

शा·भा· टी· र·प्र· ३८६

त्स्वोपक्रान्तं दसः ॥ अत्र पर्यावृत्तिशब्दात्सिद्धवदुद्गीथध्यानस्यावृत्तिरुक्ता ततो ध्यानत्वसामान्यात्फलपर्यन्तत्वसामान्याद्वा लिंगात्सर्वत्र श्रवणमनन ध्यानेष्वावृत्तिसिद्धिरित्याह लिंगाच्चेति ॥ एवं तावत्सगुणनिर्गुणसाक्षात्कारसाधनेष्वावृत्तिरुक्ता तत्र सगुणध्यानादेरावृत्तिमंगीकृत्य निर्गुणश्रवणादिष्वावृत्तिमाक्षिपत्यत्राहेत्यादिना ॥ वाक्यं निर्गुणसाक्षात्कारजननशक्तं नवा ॥ आद्ये सकृच्छ्रुतवाक्यात्साक्षात्कारसिद्धेरावृत्तिर्वैयर्थ्यमुक्ते द्वितीयं शंकते

अत्राह भवतु नाम साध्यफलेषु प्रत्ययेष्वावृत्तिः ॥ तेष्वावृत्तिसाध्यस्यातिशयस्य संभवात् ॥ यस्तु परब्रह्मविषयः प्रत्ययः नित्यशुद्धबुद्धमुक्तस्वभावमेवात्मभूतं परं ब्रह्म समर्पयति तत्र किमर्थावृत्तिरिति ॥ सकृच्छ्रुतौ च ब्रह्मात्मत्वप्रतीत्यनुपपत्तेरावृत्त्यभ्युपगम इति चेन्नावृत्तावपि तदनुपपत्तेः ॥ यदि हि तत्त्वमसीत्येवंजातीयकं वाक्यं सकृच्छ्रूयमाणं ब्रह्मात्मत्वप्रतीतिं नोत्पादयेत्ततस्तदेवावर्त्यमानमुत्पादयिष्यतीति का प्रत्याशा स्यात् ॥ अथोच्येत न केवलं वाक्यं कंचिदर्थं साक्षात्कर्तुं शक्नोति अतो युक्त्यपेक्षं वाक्यमनुभावयिष्यति ब्रह्मात्मत्वमिति ॥ तथाप्यावृत्त्यानर्थक्यमेव ॥ सापि हि युक्तिः सकृत्प्रवृत्तैव स्वमर्थमनुभावयिष्यति ॥ अथापि स्यात् युक्त्या वाक्येन च सामान्यविषयमेव विज्ञानं क्रियते न विशेषविषयं ॥ यथास्ति मे हृदये शूलमित्यतो वाक्यात् गात्रकंपादिलिंगाच्च शूलसद्भावसामान्यमेव परः प्रतिपद्यते न विशेषमनुभवति ॥ यथा स एव शूली विशेषानुभवश्चाविद्याया निवर्तकस्ततस्तदर्थावृत्तिरिति चेन्नासकृदपि तावन्मात्रे क्रियमाणे विशेषविज्ञानोत्पत्त्यसंभवात्त्न हि सकृत्प्रयुक्ताभ्यां शास्त्रयुक्तिभ्यामनवगतो विशेषः शतकृत्वोपि प्रयुज्यमानाभ्यामवगंतुं शक्यते ॥ तस्माद्यदि शास्त्रयुक्तिभ्यां विशेषः प्रतिपाद्येत यदि वा सामान्यमेवोभयथापि सकृत्प्रयुक्ते एव ते स्वकार्यं कुरुत इत्यावृत्त्यनुपयोगः ॥ न च सकृत्प्रयुक्ते शास्त्रयुक्ती कस्यचिदप्य

सकृदिति ॥ अशक्तस्यावृत्तावपि फलानुपपत्तिरित्याह नेति ॥ तथापीति स्वतोऽशक्तस्य युक्तिसाहित्यात्सकृत्तावपीत्यर्थः ((नुभवं नोत्पादयत इति वाक्ययुक्तिभ्यां परोक्षज्ञाने जातेऽप्यपरोक्षज्ञानार्थमावृत्तिरिति शंकते ऽथापि स्यादिति ॥ तयोः परोक्षज्ञानहेतुत्वस्वाभाव्यात् आवृत्तावपि न साक्षात्कारः स्यादिति परिहरति ॥ नासकृदपीति यदि तयोः साक्षात्कारसामर्थ्यं उभयथाप्यावृत्त्यनपेक्षेत्याह ॥ तस्मादिति ॥ प्रमातृवैचित्र्याद्यावृत्त्या नियदि वा परोक्षज्ञानसामर्थ्यं ॥१॥

अ·पा· ४।१

प्रमेयस्यानंशत्वात्तन्नेत्याह अपि चेति द्विविधो ह्यधिकारी स्यात् कश्चिज्जन्मांतराभ्यासान्निरस्तसमस्तासंभावनादिप्रतिबंधः कश्चित्तु प्रतिबंधवानि
ति तत्राद्यं प्रत्यावृत्तेरानर्थक्यमिष्टं द्वितीयस्य तु प्रतिबंधनिरासाय तदपेक्षेति समाधत्ते॥ अत्रोच्यत इति आवृत्तेः प्रतिबंधनिरासार्थत्वे लिंगमा

विचित्रप्रज्ञत्वात्प्रतिपत्तॄणामपि चानेकांशोपेते लौकिके पदार्थे सामान्यविशेषवति एकेनावधानेनैकमंशं धारयत्यपरेणा
परमिति स्यादप्यभ्यासोपयोगो यथा दीर्घप्रपाठकग्रहणादिषु॥ ननु निर्विशेषे ब्रह्मणि सामान्यविशेषरहिते चैतन्यमात्रात्मके प्र
मोत्पत्तावभ्यासापेक्षायुक्तेति॥ अत्रोच्यते भवेदावृत्त्यानर्थक्यं तं प्रति यस्तत्त्वमसीति सकृदुक्तमेव ब्रह्मात्मत्वमनुभवितुं शक्नुया
त्॥ यस्तु न शक्नोति तं प्रत्युपयुज्यत एवावृत्तिः॥ तथाहि छांदोग्ये तत्त्वमसि श्वेतकेतोइत्युपदिश्य भूय एव मा भगवान्॥ ७ ॥
विज्ञापयत्विति पुनः पुनः परिचोद्यमानस्तत्तदाशंकाकारणं निराकृत्य तत्त्वमसीत्येवासकृदुपदिशति तथा च श्रोतव्यो मंतव्यो नि
दिध्यासितव्य इत्यादि दर्शितं॥ ननूक्तं सकृच्छ्रुतं चेत्तत्त्वमसिवाक्यं स्वमर्थमनुभावयितुं न शक्नोति तत आवर्त्यमानमपि नैवा
शक्ष्यतीति नैष दोषो नहि दृष्टेऽनुपपन्नं नाम॥ दृश्यंते हि सकृच्छ्रुताद्वाक्यान्मंदप्रतीतं वाक्यार्थमावर्तयंतस्तत्तदाभासव्युदासे
न सम्यक्प्रतिपद्यमानाः॥ अपि च तत्त्वमसीत्येतद्वाक्यं त्वंपदार्थस्य तत्पदार्थभावमाचष्टे॥ तत्पदेन च प्रकृतं सद्ब्रह्मेक्षितृ
जगतो जन्मादिकारणमभिधीयते॥ सत्यं ज्ञानमनंतं ब्रह्म॥ विज्ञानमानंदं ब्रह्म॥ अदृष्टं द्रष्टृ अविज्ञातं विज्ञातृ अजमजरममरम
स्थूलमनण्वह्रस्वमदीर्घमित्यादिशास्त्रप्रसिद्धं॥ तत्राजादिशब्दैर्जन्मादयो भावविकारा निवर्तिताः॥ अस्थूलादिशब्दैः स्थ
स्थौल्यादयो द्रव्यधर्माः॥ विज्ञानादिशब्दैश्च चैतन्यप्रकाशात्मकत्वमुक्तं॥ एष व्यावृत्तः सर्वसंसारधर्मकोऽनुभवात्मको
ब्रह्मसंज्ञकस्तत्पदार्थो वेदांताभियुक्तानां प्रसिद्धः तथा त्वंपदार्थोऽपि प्रत्यगात्मा श्रोतृर्देहादारभ्य प्रत्यगात्मतया संभाव्यमान

दृ नयाहीति यथा षड्जादिस्वरभेदसाक्षात्कारशक्तमपि श्रोत्रमभ्यासमपेक्षते तथा ब्रह्मात्मसाक्षात्कारशक्तं वाक्यं तदपेक्षमित्यनुभवमाश्रित्याह
॥ नहि दृष्टेऽनुपपन्नं नामेति तत्त्वंपदलक्ष्यार्थस्य दुर्बोधत्वादज्ञानप्रयुक्तसंशयादिप्रतिबंधसंभवात्तद्ध्वंसाय आवृत्तिरेष्टव्येति वाच्यलक्ष्यविवे

ब्र·भा· टी· र·प्र· ३८७

यदुक्तमनंशत्वात्प्रमेयस्यावृत्त्यानर्थक्यमिति तत्राह॥ यद्यपीति॥ आरोपितांशनिरासाय त्वमेदेहोनेन्द्रियंइत्यभ्यासोयुक्तइत्यर्थः॥ वाक्यार्थज्ञाने
सति कथमभ्यासनियमः प्रमाणज्ञानस्याभ्यासायोगात् ज्ञानिनः श्रवणादिनियमायोगाच्चेत्यत आह॥ नन्विति ज्ञानात्प्रागेव श्रवणादिव्यापारनि

तत्र येषामेतौ पदार्थावज्ञानसंशयविपर्ययप्रतिबद्धौ तेषां तत्त्वमसीत्येतद्वाक्यं स्वार्थे प्रमां नोत्पादयितुं शक्नोति पदार्थज्ञानपूर्वक
त्वाद्वाक्यार्थस्येत्यतस्तान्प्रत्येष्टव्यः पदार्थविवेकप्रयोजनः शास्त्रयुक्त्यभ्यासः॥ यद्यपि च प्रतिपत्तव्य आत्मा निरंशस्तथापि
अध्यारोपितं तस्मिन् बह्वंशत्वं देहेन्द्रियमनोबुद्धिविषयवेदनादिलक्षणं॥ तत्रैकेनावधानेनैकमंशमपोहत्यपरेणापर
मिति युज्यते तत्र क्रमवती प्रतिपत्तिः॥ तत्तु पूर्वरूपमेवात्मप्रतिपत्तेः॥ येषां पुनर्निपुणमतीनां नाज्ञानसंशयविपर्ययलक्षणः
पदार्थविषयः प्रतिबंधोऽस्ति ते शक्नुवंति सकृदुक्तमेव तत्त्वमसिवाक्यार्थमनुभवितुमिति तान्प्रत्यावृत्त्यानर्थक्यमिष्टमेव॥ सकृ
दुत्पन्नैव ह्यात्मप्रतिपत्तिरविद्यां निवर्तयतीति नात्र कश्चिदपि क्रमोऽभ्युपगम्यते॥ सत्यमेवं युज्येत यदि कस्यचिदेवं प्रतिपत्ति
र्भवेत्॥ बलवती ह्यात्मनो दुःखित्वादिप्रतिपत्तिरतो न दुःखित्वाद्यभावं कश्चित्प्रतिपद्यत इति चेत्॥ न॥ देहाद्यभिमानवद्दुः
खित्वाद्यभिमानस्य मिथ्याभिमानत्वोपपत्तेः॥ प्रत्यक्षं हि देहे छिद्यमाने दह्यमाने वाहं छिद्ये दह्ये इति च मिथ्याभिमानो दृष्टस्त
था बाह्यतरेष्वपि पुत्रमित्रादिषु संतप्यमानेषु अहमेव संतप्य इत्यध्यारोपो दृष्टस्तथा दुःखित्वाद्यभिमानोऽपि स्यात् देहादिव
देव चैतन्याद्बहिरुपलभ्यमानत्वाद्दुःखित्वादीनां॥ सुषुप्तादिषु चाननुवृत्तेः चैतन्यस्य तु सुषुप्तेऽप्यनुवृत्तिमामनंति॥ यद्वै त
न्न पश्यति पश्यन्वै तन्न पश्यतीत्यादिना॥ तस्मात्सर्वदुःखविनिर्मुक्तैकचैतन्यात्मकोऽहमित्येष आत्मानुभवः॥ न चैवमात्मा
नमनुभवतः किंचिदन्यत्कृत्यमवशिष्यते॥

यमनं क्रियत इत्यर्थः॥ अधिकं शंकितुमुक्तमनुवदति॥ येषामिति॥ अधिकं शंकते॥ स
त्यमिति॥ दुःखित्वप्रत्यक्षविरोधाद्वाक्यादैक्यधीर्नोदेतीत्यर्थः॥ प्रत्यक्षस्य भ्रांतित्वादविरोध इत्याह॥ नेत्यादिना॥ दुःखादयो नात्मधर्माः दृश्यत्वात् दे
हादिवत् व्याप्यात्मस्वरूपात्मनि सत्यप्यननुवृत्तत्वाद्व्यतिरेकेण चैतन्यवदित्यर्थः॥ निर्दुःखचिदात्मनि दुःखादिधियो भ्रांतित्वाद्वाक्यार्थानुभवो न विरुध्य

रतिः कामः आत्मकामतया तृप्तिर्विषयतृष्णाक्षयः तेन संतोष आत्मानंदानुभव इति भेदः ॥ नन्वावृत्तौ — — — नियोगात्प्रवृत्तिवाच्या तयाच नियु
क्तत्वबुद्धेरकर्त्रात्मधीनेस्यादित्यत आह नत्रापीति ॥ आवृत्त्यभ्युपगमेप्यकर्त्ताहमित्यनुभवात्प्राग्व्याप्यगुरुस्तोवा नियोगात्प्रवर्त्तयेदुक्तदोषा
दित्यर्थः ॥ कथं तर्हि प्रवृत्तिरित्यत आह ॥ यस्त्विति अप्रतिभानादसंभावनादिनेत्यर्थः शिष्यबुद्ध्यनुसारेण श्रोतव्यादिवचोभिः प्रधानसिद्धार्थे।
मावृत्त्यादौ प्रवर्त्तयेदित्यर्थः ॥ २ ॥ आत्मेति तूपगच्छंति ग्राहयंति च ॥ पूर्वत्र ध्यानादेरावृत्तिरुक्ता तामुपजीव्य तत्वज्ञानार्थे ध्यानावृत्तिकाले किम

तथा च श्रुतिः किं प्रजया करिष्यामो येषां नोयमात्मायं लोक इत्यात्मविदः कर्त्तव्याभावं दर्शयति ॥ स्मृतिरपि ॥ यस्त्वात्म
रतिरेव स्यादात्मतृप्तश्च मानवः ॥ आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यत इति ॥ यस्य तु नैषोनुभवो द्रागिव जायते ॥ तं प्रत्य
नुभवार्थैवावृत्त्यभ्युपगमः ॥ तत्रापि न तत्वमसिवाक्यार्थात्प्रच्याव्यावृत्तौ प्रवर्त्तयेन्नहि वरघाताय कन्यामुद्वाहये।
ति ॥ नियुक्तस्य चास्मिन्नधिकृतोहं कर्त्ता मयेदं कर्त्तव्यमित्यवश्यं ब्रह्मप्रत्ययाद्विपरीतप्रत्यय उत्पद्यते ॥ यस्तु स्वयमेव
मंदमतिरप्रतिभानात्तं वाक्यार्थं जिहासेत्तस्यैतस्मिन्नेव वाक्यार्थे स्थिरीकार आवृत्त्यादिवाचोयुक्त्याभ्युपेयते ॥ तस्मात्पर
ब्रह्मविषयेपि प्रत्यये तदुपायोपदेशेष्वावृत्तिसिद्धिः ॥ २ ॥ आत्मेति तूपगच्छंति ग्राहयंति च ॥ ३ ॥ यः शास्त्रोक्तविशेषणः
परमात्मा स किं अहमिति ग्रहीतव्यः किं वा मदन्य इत्येतद्विचारयति ॥ कथं पुनरात्मशब्दे प्रत्यगात्मविषये श्रूयमाणे सं
शय इति ॥ उच्यते ॥ अयमात्मशब्दो मुख्यः शक्यतेभ्युपगंतुं सति जीवेश्वरयोरभेदसंभवे इतरथा तु गौणोयमभ्युपगंत

हं ब्रह्मेति ध्यातव्यं उत मत्स्वामीश्वर इत्यैक्यभेदमानाभ्यां संशयमाह यइति ॥ शब्दादेव प्रमित इत्यादावयमात्मा ब्रह्मे(व्य इति मन्यते ॥
त्याद्यभेदश्रुतिभिरैक्यनिर्णयात्संशयमाक्षिपति ॥ कथमिति भेदश्रुत्यनुग्रहाद्वैद्रप्रत्यक्षादिभिर्वास्य मासंव्यसंशय इत्याह ॥ उच्यत इति ॥
अभेदश्रुतीनां गौणत्वमुख्यत्वे उभयत्र फलं यद्यप्ययं प्रत्यक्षादिविरोधपरिहारो द्वितीयाध्यायसंगतस्तथाप्यैक्यश्रुतेरविरुद्धत्वनिश्चय।
स्य समाधावंतरंगत्वादिह संगतिः ॥

विरुद्धयोरैक्यादृष्टिरसिद्धेत्याह नाहमिति किंच किमीश्वरस्य जीवमात्रमैक्यं जीवस्येश्वरमात्रत्वं वेति विकल्प्य क्रमेण दूषयति ईश्वरस्य चेत्यादिना एकत्व
त्वश्रुतिप्रामाण्यायैक्यध्यानं कार्यमिति शङ्कते ॥ अन्यत्वेपीति ॥ एकत्वध्यानमस्मदिष्टमेव एकत्वं तु नास्तीत्याह ॥ काममिति ॥ अभेदश्रुतीनां फलवद

किं तावत्प्राप्तं ॥ नाहमिति ग्राह्यः ॥ नह्यपहतपाप्मत्वादिगुणो विपरीतगुणत्वेन शक्यते ग्रहीतुं विपरीतगुणो वापहतपाप्मत्वादिगु
णत्वेन ॥ अपहतपाप्मादिगुणश्च परमेश्वरः तद्विपरीतगुणस्तु शारीरः ॥ ईश्वरस्य च संसार्यात्मत्वे ईश्वराभावप्रसंगः ततः शास्त्रा
नर्थक्यं संसारिणोपीश्वरात्मत्वे अधिकार्यभावाच्छास्त्रानर्थक्यमेव प्रत्यक्षादिविरोधश्च ॥ अन्यत्वेपि तादात्म्यदर्शनं शास्त्रात्कर्तव्यं
प्रतिमादिष्विव विष्ण्वादिदर्शनमिति चेत् ॥ काममेवं भवतु ॥ न तु संसारिणो मुख्य आत्मेश्वर इत्येतन्नः प्रापयितव्यमेवं प्राप्ते ब्रू
मः ॥ आत्मेत्येव परमेश्वरः प्रतिपत्तव्यः ॥ तथाहि ॥ परमेश्वरप्रक्रियायां जाबाला आत्मत्वेनैवैतमुपगच्छन्ति ॥ त्वं वा अहमस्मि भ
गवो देवतेऽहं वै त्वमसि देवत इति ॥ तथान्येप्यहं ब्रह्मास्मीत्येवमादयः आत्मत्वोपगमा द्रष्टव्याः ॥ ग्राहयन्ति चात्मत्वेनैवेश्वरं
वेदान्तवाक्यानि ॥ एष त आत्मा सर्वान्तरः एष त आत्मान्तर्याम्यमृतः तत्सत्यं स आत्मा तत्त्वमसीत्येवमादीनि ॥ यदुक्तं प्रतीकद
र्शनमिदं विष्णुप्रतिमान्यायेन भविष्यतीति तदयुक्तं ॥ गौणत्वप्रसंगाद्वाक्यवैरूप्याच्च ॥ यत्र हि प्रतीकदृष्टिरभिप्रेयते सकृ
देव तत्र वचनं भवति ॥ यथा मनो ब्रह्मादित्यो ब्रह्मेत्यादि ॥ इह पुनस्त्वमहमस्म्यहं च त्वमसीत्याह अतः प्रतीकश्रुतिवैरूप्या
दभेदप्रतिपत्तिर्भेददृष्ट्यपवादाच्च ॥ तथाहि ॥ अथ योन्यां देवतामुपास्तेऽन्योसावन्योहमस्मीति न स वेद ॥ मृत्योः स मृत्यु
माप्नोति य इह नानेव पश्यति ॥ सर्वं तं परादाद्योन्यत्रात्मनः सर्वं वेदेत्येवमाद्या भूयसी श्रुतिर्भेददर्शनमपवदति ॥ यत्तूक्तं न वि
रुद्धगुणयोरन्योन्यात्मत्वसंभव इति ॥ नायं दोषो विरुद्धगुणताया मिथ्यात्वोपपत्तेः यत्पुनरुक्तं ईश्वराभावप्रसंग इति तदस

पूर्वार्थेनान्यार्थेन गौणत्वायोगाद्भेदश्रुतीनां कल्पितभेदानुवादित्वात्प्रत्यक्षादेरपि तद्विषयत्वाद्विंबप्रतिबिंबयोरिव विरुद्धधर्माणां मिथ्यात्वान्मुख्यमै
क्यमिति सिद्धांतयत्येवमित्यादिना ॥ ईश्वरस्य जीवत्वं न प्रतिपाद्यं येनेश्वराभावः स्यात्किंतु जीवस्येश्वरत्वं न चैवमधिकार्यभावः एकत्वमबोधात्प्राग धि

वेदसम्पत्तेश्चद्वालुः शंकते प्रत्यक्षाद्यभावइति वर्णेषु क्रमस्वरयोरभावादुपलब्धध्वनिस्थयोरारोपो वाच्यस्तया चारोपितक्रमस्वरविशिष्टवर्णात्म
कवेदस्य मिथ्यात्वे दर्वोरवादिमांसप्रत्नाग्रहस्त्वविद्याविजृंभितइति वेदसत्यत्वाभावो न दोषइत्याह ॥ नेति ॥ अविद्यामाश्रित्येति ॥ कस्येति प्रश्नलिंगेन
त्वयैव तस्याः सिद्धत्वदोषापानुपपत्तिरित्याह ॥ यत्त्वमिति ॥ अज्ञानमूलत्वात्प्रश्नादेरिति भावः सर्वज्ञाभिन्नेमयि कथमज्ञानमिति शंकते तेनन्विति अभ

शास्त्रप्रामाण्यादनभ्युपगमाच्च ॥ नहीश्वरस्य संसार्यात्मत्वं प्रतिपाद्यते इत्यभ्युपगच्छामः किंतर्हि संसारिणः संसारित्वापोहे
नेश्वरात्मत्वं प्रतिपिपादयिषितमिति ॥ एवं च सत्यद्वैतेश्वरस्यापहतपाप्मत्वादिगुणता विपरीतगुणतात्वितरस्य मिथ्येति व्यव
स्थितेः ॥ यद्यप्युक्तमधिकार्यभावः प्रत्यक्षादिविरोधश्चेति तदप्यसत् ॥ प्राक्प्रबोधात्संसारित्वाभ्युपगमात् ॥ तद्विषयत्वाच्च
प्रत्यक्षादिव्यवहारस्य ॥ यत्रत्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदित्यादिना हि प्रबोधे प्रत्यक्षाद्यभावं दर्शयति ॥ प्रत्यक्षा
द्यभावे श्रुतेरप्यभावप्रसंगइति चेन्नेष्टत्वात् अत्रापिता पिता भवतीत्युपक्रम्य वेदा अवेदा इति वचनादिष्यत एवास्माभिः श्रु
तेरप्यभावः प्रबोधे ॥ कस्य पुनरयमप्रबोध इति चेद्यस्त्वं पृच्छसि तस्य त इति वदामः ॥ नन्वहमीश्वरएवोक्तः श्रुत्या ॥ यद्ये
वं प्रतिबुद्धोसि नास्ति कस्यचिदप्रबोधः ॥ योपि दोषश्चोद्यते कैश्चिदविद्यया किलात्मनः सद्वितीयत्वादद्वैतानुपपत्तिरिति सो
प्येतेन प्रत्युक्तस्तस्मादात्मेत्येवेश्वरे मनो दधीत ॥ ३ ॥ २ ॥ न प्रतीके नहि सः ॥ ४ ॥ मनोब्रह्मेत्युपासीतेत्यध्यात्ममथाधिदैवतं
आकाशो ब्रह्मेति तथादित्यो ब्रह्मेत्यादेशः स यो नाम ब्रह्मेत्युपास्त इत्येवमादिषु प्रतीकोपासनेषु संशयः ॥ किं तेष्वप्यात्मग्र
हः कर्तव्यो न वेति ॥ किं तावत्प्राप्तं ॥ तेष्वप्यात्मग्रहएव युक्तः ॥ कस्मात् ब्रह्मणः श्रुतिष्वात्मत्वेन प्रसिद्धत्वात् ॥ प्रतीकाना
मपि ब्रह्मविकारत्वात् ब्रह्मत्वे सत्यात्मत्वोपपत्तेरित्येवं प्राप्ते ब्रूमः ॥ न प्रतीकेष्वात्ममतिं बध्नीयात् ॥ ५ दृष्टान्तात्किं न्यायस्य तत्त्वे

वाज्ञानाश्रयत्वमनुभवसिद्धाज्ञानस्यापलापायोगात् ॥ ज्ञानेनानिर्वाच्यस्य तस्य बाधात्ताश्रयापेक्षेत्याह यद्येवमिति ॥ अनिर्वाच्यत्वेन दोषाभावमपि
निरस्तमित्याह ॥ योपीति ॥ ३ ॥ न प्रतीकेन हि सः उभयथा ध्यानसंभवात्संशयः यथा ब्रह्मण्यभेदसत्त्वादहंग्रहस्तद्वत्कः ॥ एवं प्रतीकेष्वपि ब्रह्मविकारतया

जीवाभिन्नब्रह्माभिन्नत्वाज्जीवाभेदसत्त्वेनाहंग्रहः कार्य इति दृष्टान्ते

शा·भा·
टी·
र·प्र·
३८९

अ·पा·
४।१

अत्र प्रतीकोपासीनामहंग्रहोपास्तिभिर्विशेषः॥ सिद्धान्ते तु विशेषसिद्धिरिति फलं। एतदारभ्याधिकरणत्रयस्य प्रासंगिकी पादसंगतिः। ब्रह्मैक्यध्यानप्रसंगागतत्वादिति विवेकः। किं प्रतीकेष्वात्मत्वानुभवबलादहंग्रहः उत तद्वस्तुतो जीवाभेदसत्त्वान्नाद्य इत्याह नहीति। नानुभवतीत्यर्थः। द्वितीयमप्यसिद्ध्या दूषयति यत्पुनरित्यादिना विकारस्य ब्रह्मणा स्वरूपैक्यायोगात् बाधेनैक्यं वाच्यं प्रतीकबाधे चोपास्तिविधिर्न स्यादित्यर्थः॥ किंच कर्तृत्वाद्यबाधेनोपास्तिविधिप्रवृत्तिर्वाच्या बाधे तदयोगात् तथा च बाधमूलब्रह्मैक्यज्ञानं दूरोत्क्षिप्तं प्रतीकेष्वहंग्रहोपास्तिकल्पनानयुक्ता

न हि स उपासकः प्रतीकानि व्यस्तान्यात्मत्वेनाकलयेत्॥ यत्पुनर्ब्रह्मविकारत्वात्प्रतीकानां ब्रह्मत्वं ततश्चात्मत्वमिति॥ तदसत् प्रतीकाभावप्रसंगात्॥ विकारस्वरूपोपमर्देन हि नामादिजातस्य ब्रह्मत्वमेवाश्रितं भवति॥ स्वरूपोपमर्दे च नामादीनां कुतः प्रतीकत्वं आत्मग्रहो वा॥ न च ब्रह्मण आत्मत्वात् ब्रह्मदृष्ट्युपदेशेषु आत्मदृष्टिः कल्प्या॥ कर्तृत्वाद्यनिराकरणात्॥ कर्तृत्वादिसर्वसंसारधर्मनिराकरणेन हि ब्रह्मण आत्मत्वोपदेशः तदनिराकरणेन चोपासनविधानं॥ अतश्चोपासकस्य प्रतीकैः समत्वादात्मग्रहो नोपपद्यते॥ न हि रुचकस्वस्तिकयोरितरेतरात्मत्वमस्ति सुवर्णात्मत्वेनैव त्वेकत्वे ब्रह्मात्मनैकत्वे प्रतीकाभावप्रसंगमवोचाम अतो न प्रतीकेष्वात्मदृष्टिः क्रियते॥ ३॥४॥ ब्रह्मदृष्टिरुत्कर्षात्॥ ५॥ तेष्वेवोदाहरणेषु अन्यः संशयः॥ किमादित्यादिदृष्टयो ब्रह्मण्यध्यसितव्याः॥ किं वा ब्रह्मदृष्टिरादित्यादिष्विति॥ कुतः संशयः सामानाधिकरण्यकारणानवधारणात्॥ अत्र हि ब्रह्मशब्दस्यादित्यादिशब्दैः सामानाधिकरण्यमुपलभ्यते आदित्यो ब्रह्म प्राणो ब्रह्म विद्युद् ब्रह्मेत्यादिसमानविभक्तिनिर्देशात्॥ न चात्राञ्जसं सामानाधिकरण्यमवकल्पते॥

१ त्वाबाधविरोधादित्याह नच ब्रह्मण इति अतो जीवप्रतीकयोः स्वरूपभेदादहंग्रहविध्यश्रवणाच्च नाहंग्रह इति फलितमाह॥ अतश्चेति यथा रुचकस्वस्तिकयोः सुवर्णात्मनैकत्वेऽपि मिथो नैक्यं तथा जीवप्रतीकयोर्ब्रह्मात्मनैक्येऽपि भेदः समः यद्वि च धर्म्यतिरेकेण तयोरभावनिश्चयात् त्वैक्यं तदोपासनोच्छेद इत्यर्थः॥ ४॥ ब्रह्मदृष्टिरुत्कर्षात् एकविषयत्वं संगतिः॥ प्रश्नपूर्वकं संशयबीजमाह॥ कुत इत्यादिना सामानाधिकरण्यं श्रुतं तत्र तावन्मुख्यं ब्रह्मविकारयोर्गवाश्वयोरिव

३८९

नापि प्रकृतिविकारभावनिबंधनं वाक्यस्य विकारबाधेन ब्रह्मपरत्वापातात् नचेष्टापत्तिः नाम ब्रह्मेत्युपासीतेति विधिश्रुतिविरोधात् परिमितनामग्रह
णानर्थक्यापाताच्च ब्रह्मपरत्वे सर्वं ब्रह्मेति निवक्तव्यत्वात् अतः परिशेषादध्यासएव सामानाधिकरण्यकारणं अध्यासे च नियामकाभावात् संशयइत्यर्थः॥
उत्कृष्टनिकृष्टयोः निकृष्टमप्युपास्यं फलवत्त्वादिति न्यायोनियामकइत्यरुचेराह अथवेति अत्र विकारदृष्टिभिर्ब्रह्मोपास्तिसिद्धिः फलं सिद्धांते तु वि

अर्थांतरवचनत्वात् ब्रह्मादित्यादिशब्दानां॥ नहि भवति गौरश्व इति सामानाधिकरण्यम्॥ ननु प्रकृतिविकारभावात् ब्रह्मादि
त्यादीनां मृच्छरावादिवत् सामानाधिकरण्यं स्यात्॥ नेत्युच्यते॥ विकारप्रविलयो ह्येवं प्रकृतिसामानाधिकरण्यात् स्यात् ततश्च प्रती
काभावप्रसंगमवोचाम॥ परमात्मवाक्यं चेदं तदानीं स्यात्॥ ततश्चोपासनाधिकारो बाध्येत॥ परिमितविकारोपादानं च व्य
र्थं तस्माद्ब्राह्मणोग्निर्वैश्वानर इत्यादिवदन्यत्रान्यदृष्ट्यध्यासे सति क्व किं दृष्टिरध्यस्यतामिति संशयः तत्रानियमो नियमका
रिणः शास्त्रस्याभावादित्येवं प्राप्तं॥ अथवादित्यादिदृष्टय एव ब्रह्मणि कर्तव्या इत्येवं प्राप्तं॥ एवं हि आदित्यादिदृष्टिभिर्ब्र
ह्मोपासितं भवति ब्रह्मोपासनं च फलवदिति शास्त्रमर्यादा॥ तस्मान्न ब्रह्मदृष्टिरादित्यादिष्वित्येवं प्राप्ते ब्रूमः॥ ब्रह्मदृष्टिरेवा
दित्यादिषु स्यादिति॥ कस्मात् उत्कर्षात् एवमुत्कर्षेणादित्यादयो दृष्टा भवंत्युत्कृष्टदृष्टेस्तेष्वध्यासात्॥ तथा च लौकिको न्यायोनु
गतो भवति॥ उत्कृष्टदृष्टिर्हि निकृष्टेध्यसितव्येति लौकिको न्यायः यथा राजदृष्टिः क्षत्तरि सा चानुसर्तव्या॥ विपर्यये प्रत्यवा
यप्रसंगात्॥ नहि क्षत्तृदृष्टिपरिगृहीतो राजा निकर्षं नीयमानः श्रेयसे स्यात्॥ ननु शास्त्रप्रामाण्याद्नाशंकनीयोत्र प्रत्यवाय
प्रसंगः॥ न च लौकिकेन न्यायेन शास्त्रीया दृष्टिर्नियंतुं युक्तेति॥ अत्रोच्यते॥ निर्धारिते शास्त्रार्थे एतदेवं स्यात् संदिग्धे तु तस्मिं
स्तन्निर्णयं प्रति लौकिकोपि न्याय आश्रीयमाणो न विरुध्यते॥ ११ कारदृष्ट्या ब्रह्मण उपास्यत्वे निकर्षप्राप्तौ सत्यां फलवत्त्वासिद्धेर्वि

कारा एवोत्कृष्टब्रह्मदृष्ट्योपास्या इति फलं किंच लौकिकन्यायाविरुद्धोर्थो न ग्राह्यः प्रत्यवायप्रसंगात् किंच प्रथमश्रुतानामादित्यादिपदानामसं
जातविरोधितया मुख्यार्थत्वग्रहो न्याय्यः ब्रह्मशब्दे च दृष्टिलक्षणाग्रहः तथा चादित्यादयो ब्रह्मदृष्ट्योपास्या इत्येव वाक्यार्थ इत्याह॥ ॥

ह्यार्थसंभवे विरु॥२॥

शा॰भा॰ वी॰ र॰प्र॰ ३९०

अ॰पा॰ ४।१

मायस्याद्वेति ब्रह्मशब्दस्यैव दृष्ट्यर्थत्वे हेतुं तत्रस्माह ॥ इति परत्वादिति इतिशब्दशिरस्कः शब्दः समभिव्याहृतक्रियालक्षक इति लोके प्रसिद्धिरित्यर्थः
द्वितीयाश्रुतेश्चादित्यादीनामेवोपास्तिकर्मत्वमित्याह ॥ वाक्यशेषोपीति उत्कृष्टमेवोपास्यमिति न्यायमुक्तमनुवदति ॥ यत्तूक्तमिति द्वितीयेति श्रुतिभ्यां
तेन चोत्कृष्टदृष्ट्यध्यासे शास्त्रार्थे अवधार्यमाणे निकृष्टदृष्टिमध्यस्यन् प्रत्यवेयादिति श्लिष्यते ॥ मायस्याश्चादित्यादिशब्दानां मु-
ख्यार्थत्वमविरोधात गृहीतत्वात्तैः स्वार्थवृत्तिभिरवरुद्धायां बुद्धौ पश्चादवतरतो ब्रह्मशब्दस्य मुख्ययावृत्त्या सामानाधिकरण्या
संभवात् ब्रह्मदृष्टिविधानार्थतैवावतिष्ठते ॥ इतिपरत्वादपि ब्रह्मशब्दस्यैव स्वार्थो न्याय्यः ॥ तथा हि ब्रह्मेत्यादेशः ब्रह्मेत्युपा
सीत ब्रह्मेत्युपास्त इति च सर्वत्रेतिपरं ब्रह्मशब्दमुच्चारयति शुद्धांस्त्वादित्यादिशब्दान् ॥ ततश्च यथा शुक्तिकां रजतमिति प्रत्ये-
तीत्यत्र शुक्तिवचनस्य एव शुक्तिकाशब्दो रजतशब्दस्तु रजतप्रतीतिलक्षणार्थः ॥ प्रत्येत्येव हि केवलं रजतमिति न तु तत्र रजतम-
स्ति एवमत्राप्यादित्यादीन् ब्रह्मेति प्रतीयादिति गम्यते ॥ वाक्यशेषोपि च द्वितीयानिर्देशेनादित्यादीनेवोपास्तिक्रियया व्याप्यमा-
नान् दर्शयति ॥ स य एतदेवं विद्वानादित्यं ब्रह्मेत्युपास्ते यो वाचं ब्रह्मेत्युपास्ते यः संकल्पं ब्रह्मेत्युपास्त इति च यत्तूक्तं ब्रह्मोपा-
सनमेवात्रादरणीयं फलवत्त्वायेति तदयुक्तं उक्तेन न्यायेनादित्यादीनामेवोपास्यत्वावगमात् ॥ फलं त्वतिथ्याद्युपासन इवादित्या-
द्युपासनेपि ब्रह्मैव दास्यति ॥ सर्वाध्यक्षत्वात् ॥ वर्णितं चैतत्फलमत उपपत्तेरित्यत्र ॥ ईदृशं चात्र ब्रह्मण उपास्यत्वं यत्प्रतीके-
षु तद्दृष्ट्यध्यारोपणं प्रतिमादिष्विव विष्ण्वादीनां ॥ ५ ॥ ६ ॥ आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥ य एवासौ तपति तमुद्गीथमु-
पासीत लोकेषु पंचविधं सामोपासीत वाचि सप्तविधं सामोपासीत इयमेवर्गग्निः सामेत्येवमादिष्वंगावबद्धेषूपासनेषु सं-
शयः ॥ किमादित्यादिषु उद्गीथादिदृष्टयो विधीयंते किं वोद्गीथादिष्वेवादित्यादिदृष्टय इति ॥ ॥ लौकिकन्यायाच्चोक्तन्यायबाध इ-
त्याह ॥ तदिति ब्रह्मणोनुपास्यत्वे कथं फलदातृत्वं तत्राह ॥ फलं त्विति किं च यद्ब्रह्माविकारस्योत्कर्षस्तस्य ब्रह्मणो विशेषणत्वेप्युपास्यत्वं चास्तीत्याह ईदृ-
शं चेति ॥ ५ ॥ आदित्यादि ॥ पृथिव्यग्न्यंतरिक्षादित्यद्युसंज्ञेषु लोकेषु हिंकारप्रस्तावोद्गीथप्रतिहारनिधनैरंशैः पंचांशं सामतैरेवादिदिति उपद्रव इति

पूर्ववदुत्कर्षानवधारणादनियम इति प्रत्युदाहरणेन पूर्वपक्षमाह ॥ नन्वेतेति सिद्धरूपादित्यादिभ्यः कर्मरूपोद्गीथादीनां फलसन्निकर्षेणो-
त्कर्षोद्रस्नवद्विशेषणत्वे नियम इति दृष्टान्तेन सुखं पूर्वपक्षमाह ॥ अथवेति ननन्वपक्षसिद्धिरेव पूर्वोत्तरपक्षफलं मन्तव्यं किंच अनङ्गेष्वेवाङ्ग
दृष्टिरित्यत्रानेषंगवाचिपदप्रयोगं लिंगमाह ॥ तथा चेयमेवेति तदेतदग्न्याख्यं साम एतत्सां पृथिवीरूपायामृच्यध्यूढमुपरिस्थितमित्यर्थः ॥

तस्मादनियमः नियमकारणाभावादिति प्राप्ते ॥ न ह्यत्र ब्राह्मण इव कस्यचिदुत्कर्षविशेषोऽवधार्यते ॥ ब्रह्म हि समस्तजगत्कारणत्वादपहतपाप्मत्वादिगुणयोगाच्चादित्यादिभ्य उत्कृष्टमिति शक्यमवधारयितुं ॥ न त्वादित्योद्गीथादीनां विकारत्वाविशेषात् किंचिदुत्कर्षविशेषावधारणे कारणमस्ति ॥ अथवा नियमेनैवोद्गीथादिमतय आदित्यादिष्वध्यस्येरन् ॥ कस्मात् कर्मात्मकत्वादुद्गीथादीनां ॥ कर्मणश्च फलप्राप्तिप्रसिद्धेरुद्गीथादिमतिभिरुपास्यमाना आदित्यादयः कर्मात्मकाः सन्तः फलहेतवो भविष्यन्ति ॥ तथा चेयमेवर्गग्निः सामेत्यत्र तदेतदेतस्यामृच्यध्यूढं सामेत्यृक्शब्देन पृथिवीं निर्दिशति सामशब्देनाग्निं ॥ तच्च पृथिव्यग्न्योर्ऋक्सामदृष्टिचिकीर्षायामवकल्पते न ऋक्साम्नोः पृथिव्यग्निदृष्टिचिकीर्षायां ॥ क्षत्तरि हि राजदृष्टिकरणाद्राजशब्द उपचर्यते न राजनि क्षत्तृशब्दः ॥ अपि च लोकेषु पंचविधं सामोपासीतेत्यधिकरणनिर्देशाल्लोकेषु सामाध्यस्तव्यमिति प्रतीयते ॥ एतद्गायत्रं प्राणेषु प्रोतमिति चैतदेव दर्शयति ॥ प्रथमनिर्दिष्टेषु चादित्यादिषु चरमनिर्दिष्टं ब्रह्माध्यस्तं आदित्यो ब्रह्मेत्यादेश इत्यादिषु ॥ प्रथमनिर्दिष्टाश्च पृथिव्यादयश्चरमनिर्दिष्टा हिंकारादयः पृथिवी हिंकार इत्यादिश्रुतिषु ॥ अतोऽनङ्गेष्वादित्यादिष्वङ्गमतिनिक्षेप इति ॥ एवं प्राप्ते ब्रूमः ॥ ६ ॥ ऋचि सामवत्पृथिव्या-
मग्निर्दृश्यते अतः साम्यात्पृथिव्येवर्गग्निः सामेति ध्यानं विहितं तत्र यदि ऋक्सामात्मकयोः कर्माङ्गयोः पृथिव्यग्निदृष्टिः स्यात्तदा पृथिव्यग्न्योर्ऋक्-
सामपदप्रयोगो न स्यादित्यत्र दृष्टान्तमाह ॥ क्षत्तरीति अतः प्रयोगोऽन्यथानुपपत्त्या पृथिव्यग्न्योः ऋक्सामदृष्टिरित्यर्थः विपर्यस्तत्रम्या चैवमेवेत्याह
॥ अपि चेति गायत्रसंज्ञं साम किंच पूर्वाधिकरणसिद्धान्तन्यायेनाप्येवमित्याह ॥ प्रथमेति अनङ्गबुद्ध्याङ्गान्युपास्यानीति सिद्धान्तयति एवमिति ॥

शां॰भा॰ टी॰ र॰प्र॰ ३९१ उपासीनां हि कर्मसमृद्धिः फलं श्रूयते साचनाभिरंगेषु संस्क्रियमाणेषु उपपद्यते॥ अंगानां समृद्ध्यनुकूलप्रकृतकर्मापूर्वजनकत्वादित्यर्थः ननु य
त्रोपासीनां प्रकृतकर्मापूर्वसन्निकृष्टांगद्वारापेक्षं फलं श्रुतं तत्र फलोपपत्तये अंगानामुपास्यत्वं भवतु तदनपेक्षलोकादिफलेषूपासनेषु कथमुपा
स्यविवेक इति शंकते भवत्विति यथास्तं तत्र पशुफलस्यापि गोदोहनस्य अंगद्वारापेक्षयैव फलमिष्टं तद्वल्लोकादिफलेषूपासनेष्वपि कर्मापूर्वां
गद्वारैव फलकल्पना युक्ता कर्माधिकृतस्यैवांगाश्रितोपासनेष्वधिकारात् तदंगानामेवोपास्यमिति समाधत्ते॥ तेष्वपीति उत्कर्षानवधारणाद॰ अ॰पा ४।१

आदित्यादिमतय एवांगेषूद्गीथादिषु क्षिप्येरन्॥ कुतः उपपत्तेः उपपद्यते ह्येवमपूर्वसन्निकर्षाद् आदित्यादिमतिभिः सं
स्क्रियमाणेषूद्गीथादिषु कर्मसमृद्धिः॥ यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवतीति च विद्यायाः कर्मस
मृद्धिहेतुत्वं दर्शयति॥ भवतु कर्मसमृद्धिफलेष्वेवं॥ स्वतंत्रफलेषु तु कथं य एतदेवं विद्वांल्लोकेषु पंचविधं सामोपास्त इत्या
दिषु॥ तेष्वप्यधिकृताधिकारात् प्रकृतापूर्वसन्निकर्षेणैव फलकल्पना युक्ता॥ गोदोहनादिनियमवत् फलात्मकत्वाच्चादि
त्यादीनामुद्गीथादिभ्यः कर्मात्मकेभ्य उत्कर्षोपपत्तिः॥ आदित्यादिप्राप्तिलक्षणं हि कर्मफलं शिष्यते श्रुतिषु॥ अपि च ओ
मित्येतदक्षरमुद्गीथमुपासीतेत्यत्वेन सैवास्याक्षरस्योपव्याख्यानं भवतीति चोद्गीथमेवोपास्यत्वेनोपक्रम्यादित्यादिम
तीर्विदधाति॥ यत्तूक्तं उद्गीथादिमतिभिरुपास्यमाना आदित्यादयः कर्मभूयं भूत्वा फलं करिष्यन्तीति तदयुक्तं स्वय
मेवोपासनस्य कर्मत्वात्फलवत्त्वोपपत्तेः॥ आदित्यादिभावेनापि च दृश्यमानानामुद्गीथादीनां कर्मात्मत्वानपायात्॥
तदेतदेतस्यामृच्यध्यूढं सामेति तुलाक्षणिक एव पृथिव्यग्न्यो ऋक्सामशब्दप्रयोगः॥ ६॥ नियमदित्युक्तं निरस्यति॥ फला ३९१
त्मेति उपक्रमबलाद् अंगमुपास्यमित्याह॥ अपि चेति निरस्तमन्वादिगुणाद्युपसंख्यानमित्यर्थः द्वितीयं पूर्वपक्षं दूषयति यत्तूक्तमित्यादिना कर्म
भूयं कर्मात्मकत्वं प्राप्येत्यर्थः सिद्धादित्याद्यात्मना कर्मणो दृष्टोऽकर्मत्वहानिः स्यादित्यत आह॥ आदित्यादिभावेनेति माणवकेऽग्निदृष्टिवदुद्गी
थादिष्वादित्यादिधियां गौणत्वात् कर्मत्वाभिभावकत्वमित्यंगेष्वेतं गत्वधीरविरुद्धेत्याशयः प्रयोगानुपपत्तिमुक्तां निरस्यति तदेतदिति॥ ६॥

लक्षणबीजंसंबंधमाह लक्षणाचेति गंगायांघोषइत्यत्रसन्निकृष्टसंयोगसंबंधेनतीरलक्षणा अग्निर्माणवकइत्यत्र अग्निनिष्ठशुचित्वादिगुण
वत्वरूपपरंपरासंबंधेनलक्षणादृष्टा तथाचात्रऋक्सामयोःपृथिव्यग्निदृष्टिपक्षेपिऋक्सामपदाभ्यांस्ववाच्यार्थेद्रष्टव्यतारूपपरंपरासंबंधे
नपृथिव्यग्निलक्षणायुक्तेत्यर्थः॥ ननुप्रतीकवाचिपदस्यध्येयेअर्थेलक्षणानयुक्ताक्षत्तृपदस्यराजन्यप्रयोगादितिशंकते॥तत्रयद्यपी॰
ति तथापिऋक्सामसंबंधात्पृथिव्यग्न्योरेवैतस्यामृच्यध्यूढंसामेत्येषऋक्सामपदप्रयोगइत्यन्वयः ननुमुख्यार्थएववक्तुनोनगृह्यतेतत्राह
प्रसिद्धयोरिति तस्मादृच्यध्यूढंसामेतिमुख्ययोःपृथगुक्तेस्तद्देतत्तस्यामित्यत्रापितयोर्ग्रहे पुनरुक्तिःस्यात् अतःप्रतीकाभेददृष्ट्यापृथि

लक्षणा च यथासंभवं संनिकृष्टेन विप्रकृष्टेन वा स्वार्थसंबंधेन प्रवर्तते तत्र यद्यपि ऋक्सामयोः पृथिव्यग्निदृष्टिचिकीर्षित
थापि प्रसिद्धयोर्ऋक्सामयोर्भेदेनानुकीर्तनात् पृथिव्यग्न्योश्च सन्निधानात्तयोरेवैष ऋक्साशब्दप्रयोगः ऋक्सामसंबंधा
दिति निश्चीयते॥ सतृणाद्योपि हि कुतश्चित् कारणाद्राजन मुपसर्पन्न निवारयितुं पार्यते॥ इयमेवर्गग्निरिति च यथाक्षरन्या
समृच एव पृथिवीत्वमवधारयति॥ पृथिव्या ह्यृक्त्वेऽवधार्यमाणे इयमृगेवेत्यक्षरन्यासः स्यात्॥ य एवं विद्वान्साम गायती
ति चांगाश्रयमेव विज्ञानमुपसंहरति न पृथिव्याद्याश्रयं॥ तथा लोकेषु पंचविधं सामोपासीतेति यद्यपि सप्तमीनिर्दिष्टा लो
कास्तथापि साम्न्येव ते ऽध्यस्येरन् द्वितीयानिर्देशेन साम्न उपास्यत्वावगमात् साम्नि हि लोकेष्वध्यस्यमानेषु सामलोकात्मनो
पासितं भवति॥ अन्यथा पुनर्लोकाः सामात्मनोपासिताः स्युः एतेनैतद्गायत्रं प्राणेषु प्रोतमित्यादि व्याख्यातं॥ १ व्यग्न्योः प्रतीकस

न्निधानात्तयोरेव प्रतीकपदप्रयोगः कृतस्तद्भेददार्ढ्यायेत्यर्थः तर्हि क्षत्तृशब्दोपि राजनि स्यादित्यत आह क्षत्रिनिस्थित प्रयोगस्य निमित्तं किमपि
वाच्यं ननु निमित्तमस्तीति प्रयोग आपाद्य इति भावः॥ क्षत्ता सूतः तस्य कार्यं रथचर्यादि यदा राजैव करोति तदा क्षत्तृशब्दो राजन्यप्यस्तीत्यक्षरार्थः
ऋगाद्यावेव पृथिव्यादिदृष्टिरित्यत्र हेत्वंतरमाह॥ इयमिति॥ सप्तम्या लोकानामुपास्यत्वमुक्तं निरस्यति॥ तथा लोकेष्विति साम्नात्मना लोकानुपासी
तेति द्वितीयासप्तम्योर्भंगस्त्वया कार्यस्ततो वरं लोकात्मना सामोपासीतेति सप्तमीमात्रभंग इत्यर्थः॥ एतेनेति॥ एकविभक्तिभंगलाघवेन प्राणात्मना

ननु विभक्तिसाम्येकथं विनिर्णयस्तत्राह ॥ यत्रापीति साम्न उपासने साध्विति उपक्रम्य पृथिवी हिंकार इत्यादिना हिंकारादि पंचावयवस्य साम्न उपासनमुक्त्वा इति तु पंचविधस्योपासनमित्युपसंहृत्य अथेति सप्तविधस्य साम्न उपासनं प्रक्रम्य प्रपंचितमतः साम्न एवोपासनत्वमित्यर्थः यदुक्तं प्राथम्यात्पृथि-व्यादेरुपास्यत्वमिति तत्राह ॥ एतस्मादेवेति यद्यपि हिंकारोद्देशेन पृथिवीत्वविधेरुद्देश्यस्य प्रथमनिर्देशो वाच्यस्तथाप्युक्तन्यायबलाद्व्यत्ययो ग्राह्य

यत्रापि तु स्यादेतद्विती या निर्देशोऽथ खल्वमुमादित्यं सप्तविधं सामोपासीतेति तत्रापि समस्तस्य खलु साम्न उपासनं साध्विति तु पं-चविधस्याथ सप्तविधस्येति च साम्न एवोपास्यत्वोपक्रमात्तस्मिंस्तेवादित्यादयोऽध्यासः ॥ एतस्मादेव च साम्न उपास्यत्वावगमात् पृथिवीहिंकार इत्यादिनिर्देशविपर्ययेऽपि हिंकारादिष्वेव पृथिव्यादिदृष्टिः ॥ तस्मादंगाश्रया आदित्यादिमतयो योगेषु श्रुत्यादि-श्रुतिभ्य एवेति सिद्धं ॥ ५ ॥ ६ ॥ आसीनः संभवात् ॥ ७ ॥ कर्मांगसंबद्धेषु तावदुपासनेषु कर्मतंत्रत्वान्नासनादिचिंता ॥ नापि स-म्यक्दर्शने वस्तुतंत्रत्वाद्विज्ञानस्य ॥ इतरेषु तूपासनेषु किमनियमेन तिष्ठन्नासीनः शयानो वा प्रवर्तेत उत नियमेनासीन ए-वेति चिंतयति ॥ तत्र मानसत्वादुपासनस्यानियमः शरीरस्थितेरिति ॥ एवं प्राप्ते ब्रवीति ॥ आसीन एवोपासीतेति ॥ कुतः संभवात् ॥ उपासनं नाम समानप्रत्ययप्रवाहकरणं न च तत्तिष्ठतो धावतो वा संभवति गत्यादीनां चित्तविक्षेपकत्वात्तिष्ठतो पि देहधारणे व्यापृतं मनो न सूक्ष्मवस्तुनिरीक्षणक्षमं भवति ॥ शयानस्याप्यकस्मादेव निद्रयाभिभूयेत ॥ आसीनस्य त्वे-वंजातीयको भूयान्दोषः सुपरिहर इति संभवति तस्योपासनं ॥ ७ ॥ ध्यानाच्च ॥ ८ ॥ अपि च ध्यायत्यर्थ एषः यत्समानप्र-त्ययप्रवाहकरणं ॥ ध्यायतिश्च प्रशिथिलांगचेष्टेषु प्रतिष्ठितदृष्टिष्वेकविषयाक्षिप्तचित्तेषूपचर्यमाणो दृश्यते ॥ ध्या-

यति प्रोषितबंधुरिति ॥ आसीनश्चानायासो भवति

इत्यर्थः ॥ ६ ॥ आसीनः संभवात् क्रमेण उत्थितेनोपविष्टेन वानेकधानुष्ठानदर्शनात्सं-शयः कर्मांगाश्रितोपासनानामासननियमानपेक्षाणामनुष्ठानप्रकार उक्तस्तद्वदंगानाश्रितोपासनेष्वप्यनियम इति पूर्वपक्षयति ॥ तत्रेति अत्रास-नाभ्यासासिद्धिः सिद्धांते तु मनो देहयोर्भिन्नत्वेपि देहचांचल्ये मनसोऽनवस्थानस्य अनुभवसिद्धत्वान्मनोव्यापारेषूपासनेषु देहस्थैर्यार्थमासननिय-

तस्मादप्यासीनकर्मोपासनं ॥ ८ ॥

अ·पा· ४।१ मापेक्षे निष्फलभेदः निश्चल उत्थितस्य ॥ ७ ॥ किंच ध्यानात् आसी-नाएवस्तु· ध्यायतिशब्दार्हत्वाहुकादिवदित्याह ध्यानाच्चेति ॥ ८ ॥

अत्रैव श्रौतं दृष्टान्तमाह ॥ अचलत्वं चेति ॥ ९ ॥ बाह्यस्य शरीरस्य चासनस्य स्मरणान्नियम इत्याह ॥ स्मरन्ति चेति ॥ १० ॥ यत्रैकाग्रता तत्राविशेषात् ॥
निषेवणानामिन्नोपासनेष्वप्राच्यादिदिशि तीर्थादिदेशे प्रदोषादिकाले नियमोऽस्ति न वेत्युभयथा संभवात्संशयः एकविषयत्वसंगतिरुपासीनो विहि
तत्वाद्यागादिवदस्ति दिगादिनियम इति पूर्वपक्षः ॥ अत्र दिगादिष्वादरः फलं सिद्धान्ते त्वनादरः ॥ ध्येये चित्तैकाग्र्यस्य प्राधान्यात्प्रधानाऽस्ति न देशा

अचलत्वं चापेक्ष्य ॥ ९ ॥ अपि च ध्यायतीव पृथिवीत्यत्र पृथिव्यादिष्वचलत्वमेवापेक्ष्य ध्यायतिवादो भवति ॥ तच्च लिंगमुपासन
स्यासीनकर्मत्वे ॥ ९ ॥ स्मरन्ति च ॥ १० ॥ स्मरन्त्यपि च शिष्टा उपासनांगत्वेनासनं । शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मन इत्यादिना ॥
अत एव पद्मकादीनामासनविशेषाणामुपदेशो योगशास्त्रे ॥ १०॥६॥ यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥ दिग्देशकालेषु संशयः ॥
किमस्ति कश्चिन्नियमो नास्ति वेति ॥ प्रायेण वैदिकेष्वारंभेषु दिगादिनियमदर्शनात्स्यादिहापि कश्चिन्नियम इति यस्य मतिस्तं
प्रत्याह ॥ दिग्देशकालेष्वर्थलक्षण एव नियमः ॥ यत्रैवास्य दिशि देशे काले वा मनसः सौकर्येणैकाग्रता भवति तत्रैवोपासीत ॥
प्राचीदिक्पूर्वाह्णप्राचीनप्रवणादिवद्विशेषाश्रवणात् ॥ एकाग्रता ह्यादृष्टायाः सर्वत्राविशेषात् ॥ ननु विशेषमपि केचिदामनन्ति
॥ समे शुचौ शर्करावह्निवालुकाविवर्जिते शब्दजलाश्रयादिभिः ॥ मनोनुकूले न तु चक्षुःपीडने गुहानिवाताश्रयणे प्रयोजयेदि
ति यथेति उच्यते ॥ सत्यमस्त्येवंजातीयको नियमः सति त्वेतस्मिंस्तद्गतेषु विशेषेष्वनियम इति सुहृद्भूत्वाचार्य आचष्टे ॥ मनो
नुकूल इति चैषा श्रुतिर्यत्रैकाग्रता तत्रैवेत्येतदेव दर्शयति ॥ ७ ॥ ११ ॥ आप्रायणात्तत्रापि हि दृष्टं ॥ १२ ॥ आवृत्तिः सर्वोपासन
ष्वादर्तव्येति स्थितमासनाद्यधिकरणं ॥ दिग्ग्रहणस्योचितत्वादिति विवेकः अर्थलक्षण एवेति ऐकाग्र्यफललिंगक एवेत्यर्थः प्राचीनप्रवणे

प्रागदेशे निम्नस्थले वैश्वदेवं कुर्यादित्येवं वदत्र दिगादिविशेषो न श्रूयते अतोऽनुमानमप्रयोजकमिति भावः ॥ विशेषाश्रवणमसिद्धमिति शंकते ॥ ननु
विशेषमपीति ॥ शर्कराः सूक्ष्मपाषाणाः जलाश्रयवर्जनं शीतनिवृत्त्यर्थं चक्षुःपीडनो मशकः वाचनिकसमदेशादिनियममंगीकृत्य चित्तैकाग्र्य
विरुद्धेषु देशादिगतेषु प्राचीनप्रवणत्वादिष्वनादर इति सुहृद्भावेन सूत्रकृदुपदिशति देशाद्याग्रहे चित्तविक्षेपात्समाधिभंगः स्यात्तन्माभूदिति ॥ ११ ॥

आप्रायणात् ॥ अदृष्टहेतुत्वसंभवमाह ॥ आवृत्तिरिति ॥

अनियोज्यैव ब्रह्मण्यात्मत्वप्रतिपत्तिर्येषां तस्य विदुष इत्यर्थः अहंग्रहोपासने ष्वनुष्ठानस्योभयथा दृष्टेः संशयमाह ॥ यावत्पुनरितियथादित्यादिनियम
स्याविधेस्ताहर स्तद्दामरणमुपास्यावृत्तेः अविधानादनियम इति पूर्वपक्षः मरणपर्यन्तमावृत्तिरिति सिद्धान्तयति ॥ एवमिति ॥ उपासीनां कर्मणां चान्त्यका
ले प्राप्तव्यफलस्फूर्तिद्वारा फलहेतुत्वेमानमाह ॥ सविज्ञान इति भावनामयं विज्ञानं फलस्फुरणं तेन सहितः सविज्ञानो विज्ञानस्फुरितं फलं विज्ञानमित्य

तत्र यानि तावत्सम्यक्दर्शनानि उपासनानि तान्यवघातादिवत्कार्यपर्यवसानानीति ज्ञानमेवैषामावृत्तिपरिमाणं ॥ नहि सम्यक्दर्शने
कार्ये निष्पन्ने यत्नान्तरं किंचिच्छासितुं शक्यं ॥ अनियोज्यब्रह्मात्मत्वप्रतिपत्तेः शास्त्रस्याविषयत्वात् ॥ यानि पुनरभ्युदयफला
नि तेषां चिंता ॥ किं कियंतं चित्कालं प्रत्ययमावर्त्योपरमेत् ॥ उत यावज्जीवमावर्तयेदिति ॥ किं तावत्प्राप्तं ॥ कियंतं चित्कालं प्र
त्ययमभ्यस्योत्सृजेत् ॥ आवृत्तिविशिष्टस्योपासनशब्दार्थस्य कृतत्वादिति ॥ एवं प्राप्ते ब्रूमः ॥ आप्रायणादेवावर्तयेत्प्रत्ययं ॥ अं
त्यप्रत्ययवशाददृष्टफलप्राप्तेः ॥ कर्माण्यपि हि जन्मांतरोपभोग्यं फलमारभमाणानि तदनुरूपं भावनाविज्ञानं प्रायणकाले आ
क्षिपंति ॥ सविज्ञानो भवति सविज्ञानमेवान्ववक्रामति यच्चित्तस्तेनैष प्राणमायाति प्राणस्तेजसा युक्तः सहात्मना यथासंकल्पि
तं लोकं नयतीति चैवमादिश्रुतिभ्यः ॥ तृणजलूकानिदर्शनाच्च ॥ प्रत्ययास्त्वेते स्वरूपानुवृत्तिं मुक्त्वा किमन्यत्प्रायणकालभावि
भावनाविज्ञानमपेक्षेरन् ॥ तस्माद्ये प्रतिपत्तव्यफलभावनात्मकाः प्रत्ययास्तेषु प्रायणादावृत्तिः तथा च श्रुतिः ॥ स यावत्क्रतुरय
मस्माल्लोकात्प्रैतीति प्रायणकालेपि प्रत्ययानुवृत्तिं दर्शयति ॥ स्मृतिरपि ॥ यं यं वापि स्मरन्भावं त्यजत्यंते कलेवरं ॥ तं तमेवै
ति कौंतेय सदा तद्भावभावित इति ॥ प्रयाणकाले मनसाचलेनेति च ॥ ११ र्थः यस्मिन्लोके चित्तं संकल्पोस्येति यच्चित्तस्तेन संकल्पि
तेन लोकेन सह फलस्फूर्त्यनंतरं मनः प्राणे लीयत इति यावत् ॥ तेज उदान आत्मा जीवः ॥ जलूकादृष्टांतश्रुतेश्च भाविफलस्फूर्तिरस्तीत्यर्थः ॥ अस्त्वि
दं मंत्यफलं विज्ञानं कर्मणामिवादृष्टद्वारोपासीनां तनतः कुत आमरणमावृत्तिरित्यत आह ॥ प्रत्ययास्त्विति उपास्ति प्रत्ययानां धारावाहिकतया स्वरूपानिवृ
त्तिरेवांत्यविज्ञानं न तदृष्टद्वारकमन्यदपेक्षितं सर्वभावानामेव स्वसमानजातीयद्वारानपेक्षतया प्रत्ययानां प्रत्ययांतरापेक्षायोगात् ॥ कर्मणां तु दृष्टद्वा

रतत्त्रयमक्षितमस्यच्युतमसि प्राणसंशितमसीति मंत्रत्रयं मरणकालेपि स्मरेदित्यर्थः॥१२॥ यथोपासकानां यावज्जीवं कर्तव्यमस्ति न तथा-
त्मविदामिति कर्मक्षयलक्षणां जीवन्मुक्तिमाह ॥तदधिगममिति॥ ज्ञानसाधनेषु यत्नाधिक्यार्थं फलाध्यायेपि साधनविचारः कृतः संप्रति फ-
लाध्यायस्य फलचिंता क्रियत इत्याह ॥ गत इति कर्मणां फलांतत्वश्रवणात् ज्ञाननाश्यत्वश्रवणाच्च संशयः ॥ पूर्वपक्षे ज्ञानिनोपि संचितपाप-
भोगानंतरं मुक्तिः सिद्धांते तु ज्ञानसमकालं पापनाशाज्जीवन्मुक्तिरिति फलं ॥ न हिंस्यादित्यादिनिषेधशास्त्राद्दुरितादृष्टस्य दुःखदायिनी शक्ति-
रधिगता ॥ नाभुक्तं क्षीयते कर्मेति च स्मरंति ॥ अतः फलांतमेव पापं न मध्ये नश्यतीति पूर्वपक्षः ननु न हि तन्नाशार्थं प्रायश्चित्तविधिर्न स्यादि-

सोंतवेलायामेतत्त्रयं प्रतिपद्येतेति च मरणवेलायामपि कर्तव्यशेषं श्रावयति ॥ ८ ॥ १२ ॥ तदधिगम उत्तरपूर्वाघयोर-
श्लेषविनाशौ तद्व्यपदेशात् ॥ १३ ॥ गतस्तृतीयशेषः ॥ अथेदानीं ब्रह्मविद्याफलं प्रति चिंता प्रतीयते ॥ ब्रह्माधिगमे स-
ति तद्विपरीतफलं दुरितं क्षीयते न क्षीयते वेति संशयः ॥ किं तावत्प्राप्तं ॥ फलार्थत्वात्कर्मणः फलमदत्त्वा न संभाव्यते क्षयः
फलदायिनी ह्यस्य शक्तिः श्रुत्या समधिगता ॥ यदि तदंतरेणैव फलोपभोगमपवृज्येत श्रुतिः कदर्थिता स्यात् ॥ स्मरं-
ति च न हि कर्म क्षीयत इति ॥ नन्वेवं सति प्रायश्चित्तोपदेशोऽनर्थकः प्राप्नोति नैष दोषः ॥ प्रायश्चित्तानां नैमित्तिकत्वो-
पपत्तेर्गृहदाहेष्ट्यादिवत् ॥ अपि च प्रायश्चित्तानां दोषसंयोगेन विधानाद्भवेदपि दोषक्षपणार्थता ॥ नत्वेवं ब्रह्मवि-
द्यायां विधानमस्ति ॥ नन्वनभ्युपगम्यमाने ब्रह्मविदः कर्मक्षये तत्फलस्यावश्यं भोक्तव्यत्वादनिर्मोक्षः स्यात् ॥ ९ ॥

ति चेन्न यथा आहिताग्नेर्गृहदाहे निमित्ते सति अग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेदितीष्टिविधिस्तद्वद्दोषे निमित्तमात्रे सति प्रायश्चित्त-
विधेर्दोषनाशार्थत्वासिद्धेः ॥ ननु विषम उपन्यासः युक्तं गृहदाहस्य सिद्धत्वादयोग्यत्वाच्च फलत्वानिमित्तमात्रत्वं दोषवान् प्रायश्चित्तं कुर्यादित्यत्र तु म-
लिनः स्नायादितिवद्दोषपदस्य निवृत्तिद्वारा फलपरत्वसंभवात् तरति ब्रह्महत्यां योऽश्वमेधेन यजत इति प्रायश्चित्तानां पापनिवृत्तिश्रुतेश्चात उक्तप्रा-
यश्चित्तस्य नैमित्तिकत्वमित्यत आह ॥ अपि चेति ज्ञानस्य दोषनाशार्थतया विधानं नास्ति क्षीयंते चास्य कर्माणीत्यादेर्ज्ञानस्तावकमात्रत्वादित्यर्थः

शा.भा. कर्मभोगानंतरं देशकालांतरे मोक्षो भविष्यति शास्त्रप्रामाण्यादित्याह ॥ नेत्युच्यत इति ज्ञानात्कर्मक्षयस्यापूर्वत्वान्मानांतराविरुद्धत्वाच्चतत्प्र — अ.पा.
टी. शानेकवाक्यानां स्तावकत्वायोगात्तस्यास्तित्वमिति सिद्धांतयति ॥ एवमित्यादिना पापक्रियातोः पूर्वोत्तरयोरश्लेषः ॥ सगुणब्रह्मविद्यायां — ४।१
र.प्र.
३५५

नेत्युच्यते देशकालनिमित्तापेक्षो मोक्षः कर्मफलवत् भविष्यति ॥ तस्मात्तद्ब्रह्माधिगमे दुरितनिवृत्तिरिति ॥ एवं प्राप्ते ब्रूमः ॥
तदधिगमे ब्रह्माधिगमे सति उत्तरपूर्वयोरघयोरश्लेषविनाशौ भवतः ॥ उत्तरस्याश्लेषः पूर्वस्य विनाशः कस्मात् ॥ तद्व्यपदे-
शात् ॥ तथाहि ब्रह्मविद्याप्रक्रियायां संभाव्यमानसंबंधस्यागामिनो दुरितस्यानभिसंबंधं विदुषो व्यपदिशति ॥ यथा पुष्क-
रपलाश आपो न श्लिष्यंत एवमेवंविदि पापं कर्म न श्लिष्यत इति ॥ तथा विनाशमपि पूर्वोपचितस्य दुरितस्य व्यपदिशति ॥
तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयंत इति ॥ अयमपरः कर्मक्षयव्यपदेशो भवति ॥ भिद्यते हृद-
यग्रंथिश्छिद्यंते सर्वसंशयाः ॥ क्षीयंते चास्य कर्माणि तस्मिन्दृष्टे परावरे इति ॥ यदुक्तं ॥ अनुपभुक्तफलस्य कर्मणः क्षयकल्प-
नायां शास्त्रं कदर्थितं स्यादिति ॥ नैष दोषः ॥ नहि वयं कर्मणः फलदायिनीं शक्तिमवजानीमहे ॥ विद्यत एव सा ॥ सा तु विद्या-
दिना कारणांतरेण प्रतिबध्यत इति वदामः ॥ शक्तिसद्भावमात्रे च शास्त्रं व्याप्रियते न प्रतिबंधाप्रतिबंधयोरपि ॥ न हि कर्म
क्षीयत इत्येतदपि स्मरणमौत्सर्गिकं न भोगादृते कर्म क्षीयते तदर्थत्वादिति ॥ इष्यत एव तु प्रायश्चित्तादिना तस्य क्षयः ॥ स-
र्वं पाप्मानं तरति तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेदेत्यादिश्रुतिस्मृतिभ्यः यत्तूक्तं नैमित्तिकानि प्रायश्चि-
त्तानि भविष्यंतीति तदसत् दोषसंयोगेन चोद्यमानानामेषां दोषनिर्घातफलसंभवे फलांतरकल्पनानुपपत्तेः यत्पुनरेतदु-
क्तं न प्रायश्चित्तवद्दोषक्षयोद्देशेन विद्याविधानमस्तीति ब्रूमः सगुणासु तावद्विद्यासु विद्यत एव विधानं तासु च वाक्यशेष-

—व्यपदेशमुक्त्वा निर्गुणायां तमाह ॥ अयमपर इति परोक्तं दूषयति ॥ यदुक्तमित्या ॥ ऐश्वर्यप्राप्तिः पापनिवृत्तिश्च विद्यावत उच्यते ॥
दिना विधिनिषेधशास्त्रं नाभुक्तं क्षीयत इत्यादिस्मृतिश्च कर्मणः फलशक्तौ प्रमाणमतः शक्तस्यापि कुतश्चिन्नाशांगीकारे न शास्त्रविरोध इत्यर्थः

तत्त्वज्ञानमात्मन्यशेषदुरितनाशकं तन्मूलाध्यासबाधकत्वात् यद्दुरितमूलकर्तृत्वाध्यासबाधकं ज्ञानं तद्दोषवदित्याह तथापीत्यकर्त्रात्मबोधादिति ॥
श्रुतार्थमेव युक्त्या दृढयत्यश्लेषइति चेति मूलाध्यासानुवृत्तेः पापस्याश्लेषः ॥ तन्नाशान्हि नाशइत्यर्थः अध्यासाभावे विद्वदनुभवमाह पूर्वेति नोसशास्त्र

तयोश्चाविवक्षाकारणं नास्तीत्यतः पापप्रहाणपूर्वकैश्वर्यप्राप्तिस्तासां फलमिति निश्चीयते ॥ निर्गुणायां तु विद्यायां यद्यपि विधानं
नास्ति तथाप्यकर्त्रात्मत्वबोधात्कर्मप्रदाह सिद्धिः ॥ अश्लेषइति ॥ आगामिषु कर्मसु कर्तृत्वमेव न प्रतिपद्यते ब्रह्मविदिति दर्शयति ॥ अ
तिक्रान्तेषु तु यद्यपि मिथ्याज्ञानात् कर्तृत्वं प्रतिपेदे इव तथापि विद्यासामर्थ्यान्मिथ्याज्ञाननिवृत्तेस्तान्यपि प्रविलीयन्त इत्याह
विनाशइति ॥ पूर्वसिद्धकर्तृत्वभोक्तृत्वविपरीतं हि त्रिष्वपि कालेषु अकर्तृत्वाभोक्तृत्वस्वरूपं ब्रह्माहमस्मि नेतः पूर्वमपि कर्ता भो
क्ता वाहमासं नेदानीं नापि भविष्यत्काल इति ब्रह्मविदवगच्छति ॥ एवमेव च मोक्ष उपपद्यते ॥ अन्यथा ह्यनादिकालप्रवृत्ता
नां कर्मणां क्षयाभावे मोक्षाभावः स्यात् ॥ न च देशकालनिमित्तापेक्षो मोक्षः कर्मफलवद्भवितुमर्हति ॥ अनित्यत्वप्रसंगात् ॥ प
रोक्षत्वानुपपत्तेश्च ज्ञानफलस्य ॥ तस्माद्ब्रह्माधिगमे दुरितक्षय इति स्थितं ॥ ९ ॥ १३ ॥ इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥ पू
र्वस्मिन्नधिकरणे बंधहेतोरघस्य स्वाभाविकस्याश्लेषविनाशौ ज्ञाननिमित्तौ शास्त्रव्यपदेशान्निरूपितौ ॥ धर्मस्य पुनः शास्त्री
यत्वाच्छास्त्रीयेण ज्ञानेनाविरोध इत्याशंक्य तन्निराकरणाय पूर्वाधिकरणन्यायातिदेशः क्रियते ॥ इतरस्यापि पुण्यस्य कर्मणः
एवमघवदसंश्लेषो विनाशश्च ज्ञानवतो भवतः ॥ कुतः तस्यापि स्वफलहेतुत्वेन ज्ञानफलप्रतिबंधित्वप्रसंगात् ॥ उभे उ हैवै
ष एते तरतीत्यादिश्रुतिषु च दुष्कृतवत्सुकृतस्यापि प्रणाशव्यपदेशात् ॥ अकर्त्रात्मत्वबोधनिमित्तस्य च कर्मक्षयस्य सुकृतदु
ष्कृतयोस्तुल्यत्वात् ॥ क्षीयंते चास्य कर्माणीति चाविशेषश्रुतेः ॥ ९ बलाच्च ज्ञानात्कर्मक्षयसिद्धिरित्याह ॥ एवमेवेति ज्ञानात्कर्मक्षये सत्य

वित्यर्थः मोक्षस्य कर्मफलसाम्यमुक्तं निरस्यति न चेति ॥ १३ ॥ इतरस्यापि तु ॥ अतिदेशत्वात्संगत्याद्यपेक्षा ॥ ज्ञानात्पुण्यं क्षीयते न वेति पूर्ववत्संदेहे
ज्ञानं तु न पुण्यनाशकं शास्त्रीयत्वात्पुण्यवदित्यधिकाशंकामुक्त्वातिदेशं व्याचष्टे धर्मस्येत्यादिना ज्ञानं पुण्यनाशकं तन्मूलाविद्याघातित्वादिति न्यायो

शा॰भा॰ टी॰ र॰प्र॰ ३९५

अ॰पा॰ ४।१

ननुक्षीयंतेचेत्यविशेषश्रुतिः पापविषया सर्वेपाप्मानंतरतीतिविशेषश्रुतेरित्यत आह॥ यत्रापिकेवलइति पापपुण्यक्षयपराधिकरणद्वयस्य॥
फलमाह॥ पातेत्विति॥१४॥ अनारब्धकार्येएवतु॥ उक्तकर्मक्षयंविषयीकृत्यक्षीयंतेचेत्यविशेषश्रुतेस्तस्यतावदेवचिरमितिश्रुतेःसंशयमा

यत्रापिकेवलएवपाप्मशब्दः दृश्यतेतत्रापितेनैवपुण्यमप्याकलितमितिद्रष्टव्यं॥ ज्ञानफलापेक्षयानिकृष्टफलत्वात्॥ अस्तिच
श्रुतौपुण्येपिपाप्मशब्दः॥ नैनंसेतुमहोरात्रेतरतइत्यत्रसहदुष्कृतेनसुकृतमप्यनुक्रम्यसर्वेपाप्मानोतोनिवर्तन्तइत्यविशेषेणै
वप्रकृतेपुण्येपाप्मशब्दप्रयोगात्॥ पातेत्विति तुशब्दोवधारणार्थः॥ एवंधर्माधर्मयोर्बंधहेत्वोर्विद्यासामर्थ्यात् द्वयोर्विनाशसि
द्धेरवश्यंभाविनीविदुषःशरीरपातेमुक्तिरित्यवधारयति॥१०॥१४॥ अनारब्धकार्येएवतुपूर्वेतदवधेः॥१५॥ पूर्वयोरधि
करणयोर्ज्ञाननिमित्तःसुकृतदुष्कृतयोर्विनाशोवधारितः॥ सकिमविशेषेणारब्धकार्ययोरनारब्धकार्ययोश्चभवतिउतवि
शेषेणानारब्धकार्ययोरेवेतिविचार्यते॥ तत्रउभेउहैवैषएतेतरतीत्येवमादिश्रुतिष्वविशेषश्रवणादविशेषेणैवक्षयइति॥ एवं
प्राप्तेप्रत्याह॥ अनारब्धकार्येएवत्विति॥ अप्रवृत्तफलेएवपूर्वेजन्मान्तरसंचिते अस्मिन्नपिचजन्मनिप्राक्ज्ञानोत्प
त्तेःसंचितेसुकृतदुष्कृतेज्ञानाधिगमात् क्षीयेतेनत्वारब्धकार्येसामिभुक्तफले याभ्यामेतत् ब्रह्मज्ञानायतनंजन्म
निर्मितं॥ कुतएतत्तस्यतावदेवचिरंयावन्नविमोक्ष्येअथसंपत्स्यइति शरीरपातावधिकरणात्क्षेमप्राप्तेः॥ इतरथाहिज्ञा
नादशेषकर्मक्षयेसतिस्थितिहेत्वभावात् ज्ञानप्राप्त्यनंतरमेवक्षेममश्नुवीत॥ तत्रशरीरपातप्रतीक्षांनाचक्षीत॥ ननुव
स्तुबलेनैवायमकर्त्रात्मावबोधःकर्माणिक्षपयन् कथंकानिचित्क्षपयेत्कानिचिच्चोपेक्षेत॥ नहिसमानेग्निबीजसंपर्के
केषांचित्बीजशक्तिःक्षीयतेकेषांचिन्नक्षीयतइतिशक्यमंगीकर्तुमिति॥ ११२॥ पूर्वयोरितिजीवन्मुक्त्यसिद्धिलसिद्धिश्चेत्युभ
यत्रफलंपूर्वसिद्धांतन्यायेनपूर्वपक्षप्राप्तौउक्तोत्सर्गतःकर्मक्षतिःप्रारब्धान्यकर्मविषयेत्यपवादंसिद्धांतयत्येवमिति सामिशब्दोर्धवाचकः
॥ प्रारब्धात्तावन्नविमुच्यते तावानेवविलंबः ततोमोक्षेब्रह्मसंपद्यतइतिश्रुत्यर्थः॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥

देहपातावधिलिंगानन्तविदां याज्ञवल्क्यादीनां देहधारणश्रुतिस्मृतिलिंगाच्च प्रारब्धकर्मणस्तत्त्वज्ञानं प्रतिहेतुत्वेनोपजीव्यत्वाच्च प्रारब्ध-
सिद्धे सत्यपि वंदं तत्त्वज्ञानं न तत्सिद्ध्यर्थं अविद्यांशं विक्षेपशक्त्यात्मकं विहायावरकाविद्यांशं नाशयतीत्याह ॥ उच्यतेनतावदिति ॥ विक्षेपकाविद्या-
लेश एव तत्संस्कारः ॥ शिष्यान्प्रति जीवन्मुक्तोस्वानुभवमाह अपि च नैवेति ॥ १५ ॥ अग्निहोत्रादि तु नित्यं नैमित्तिकं कर्म ज्ञानात्प्रागस्यति नवेति संदेहे

उच्यतेन तावदनाश्रित्यारब्धकार्ये कर्माशये ज्ञानोत्पत्तिरुपपद्यते ॥ आश्रिते च तस्मिन् कुलालचक्रवत्प्रवृत्तवेगस्यान्तराले प्र-
तिबंधासंभवात् भवति वेगक्षयप्रतिपालनं ॥ अकर्त्रात्मबोधोपि हि मिथ्याज्ञानबाधनेन कर्माण्युच्छिनत्ति बाधितमपि तु मिथ्या-
ज्ञानं द्विचंद्रज्ञानवत्संस्कारवशात्कंचित्कालमनुवर्तत एव ॥ अपि च नैवात्र विवदितव्यं ब्रह्मविदः कंचित्कालं शरीरं ध्रियते
न वा ध्रियत इति ॥ कथं ह्येकस्य स्वहृदयप्रत्ययं ब्रह्मवेदनं देहधारणं चापरेण प्रतिक्षेप्तुं शक्येत श्रुतिस्मृतिषु च स्थितप्रज्ञलक्षण-
निर्देशेनैतदेव निरुच्यते ॥ तस्मादनारब्धकार्ययोरेव सुकृतदुःकृतयोर्विद्यासामर्थ्यात्क्षय इति निर्णयः ॥ २१ ॥ १५ ॥ अग्नि-
होत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥ पुण्यस्याप्यश्लेषविनाशयोरघवत्या यो निर्दिष्टः सोतिदेशः सर्वपुण्यविषय इत्या-
शंक्य प्रतिवक्ति ॥ अग्निहोत्रादीति ॥ तु शब्द आशंकामपनुदति ॥ यन्नित्यं कर्म वैदिकमग्निहोत्रादि तत्तत्कार्यायैव भव-
ति ॥ ज्ञानस्य यत्कार्यं तदेवास्यापि कार्यमित्यर्थः ॥ कुतः ॥ तमेतं वेदानुवचनेन ब्राह्मणा विविदिषंति यज्ञेन दानेनेत्यादिदर्श-
नात् ॥ ननु ज्ञानकर्मणोर्विलक्षणकार्यत्वात् कार्यैकत्वानुपपत्तिः ॥ नैष दोषः ॥ ज्वरमरणकार्ययोरपि दधिविषयोर्गुडमंत्र-
संयुक्तयोस्तृप्तिपुष्टिकार्यदर्शनात् ॥ तद्वत्कर्मणोपि ज्ञानसंयुक्तस्य मोक्षकार्योपपत्तेः ॥ ननु नारभ्यो मोक्षः कथमस्य कर्मका-
र्यत्वमुच्यते ॥ नैष दोषः आरादुपकारकत्वात्कर्मणः ज्ञानस्यैव हि प्रापकं सत्कर्म प्रणाड्या मोक्षकारणमित्युपचर्यते ॥ ११ उभे पुण्यपापे त-
रतीत्यविशेषश्रुतेर्नश्यतीत्याशंक्य तरत्यपि इत्युक्तातिदेशस्य नित्याद्यतिरिक्तकाम्यपुण्यविषयत्वेनात्रापवादं सिद्धांतयति ॥ पुण्यस्येत्यादिनाप्र-
त्पूर्वपक्षे ज्ञानार्थनित्याद्यनुष्ठानासिद्धिः पंकप्रक्षालनन्यायात् सिद्धांते तु ज्ञानोत्पत्त्यर्थत्वात् तत्सिद्धिरिति विवेकः अत्र भाष्ये ज्ञानकर्मणोः साक्षादेक-

शा·भा· टी· र·म· ३९६

अ·पा· ४।१

अत एवेति श्लाघनादूर्ध्वं कर्माभावात्पूर्वकर्मविषयमित्यर्थः निर्गुणविद्यायां कर्मसाहित्यं नृप्तिमतिभोन ब्रह्मलोकगते नेवदर्शितं संप्रति सगुणवि
द्यापरत्वेन सूत्रस्यां जस्यमाह ॥ सगुणास्विति ॥ १६ ॥ उत्तरसूत्रार्थं गृह्णाति किमित्यादिना यस्मात्स्यादन्यत्काम्यं पुण्यं पापं च तदेव विद्वत्सुह
अत एव चातिक्रांतविषयमेतत्कार्यैकत्वाभिधानं ॥ नहि ब्रह्मविद आगाम्यग्निहोत्रादिसंभवति अनियोज्यब्रह्मात्मत्वप्रतिपत्तेः
शास्त्रस्याविषयत्वात् सगुणासु तु विद्यासु कर्मकर्तृत्वानतिवृत्तेः संभवत्यागाम्यप्यग्निहोत्रादि ॥ तस्यापि निरभिसंधिनः कार्यान्त
राभावाद्विद्यासंगत्युपपत्तिः ॥ १६ ॥ किंविषयं पुनरिदमश्लेषविनाशवचनं किंविषयं वादो विनियोगवचनं एकेषां शाखि
नां तस्य पुत्रा दायमुपयंति सुहृदः साधुकृत्यां द्विषंतः पापकृत्यामिति अत उत्तरं पठति ॥ अतोन्यापि ह्येकेषामुभयोः ॥ १७ ॥
अतोग्निहोत्रादेर्नित्यात्कर्मणोन्यापि ह्यस्ति साधुकृत्या या फलमभिसंधाय क्रियते तस्या एष विनियोग उक्त एकेषां शाखि
नां सुहृदः साधुकृत्यामुपयंतीति ॥ तस्या एवं चेदमघवदश्लेषविनाशनिरूपणं ॥ इतरस्याप्येवमविश्लेषवदिति ॥ तथा
जातीयकस्य काम्यस्य कर्मणो विद्यां प्रत्यनुपकारकत्वे संप्रतिपत्तिरुभयोरपि जैमिनिबादरायणयोराचार्ययोः ॥ १७ ॥
१७ ॥ यदेव विद्ययेति हि ॥ १८ ॥ समधिगतमेतदनंतराधिकरणे नित्यमग्निहोत्रादिकं कर्म मुमुक्षुणा मोक्षप्रयोजनोद्दे
शेन कृतमुपात्तदुरितक्षयहेतुत्वद्वारेण सत्त्वशुद्धिकारणतां प्रतिपद्यमानं मोक्षप्रयोजनब्रह्माधिगमनिमित्तत्वेन ब्र
ह्मविद्यया सहैककार्यं भवतीति ॥ तत्राग्निहोत्रादि कर्मांगव्यपाश्रयविद्यासंयुक्तं केवलं चास्ति ॥ य एवं विद्वान्यज
ति य एवं विद्वान् जुहोति य एवं विद्वान् शंसति य एवं विद्वान् गायति ॥ तस्मादेवंविदमेव ब्रह्माणं कुर्वीत नानेवंविदं इति ॥
भौ कुरुतो यश्चैतदेवं वेद यश्च न वेदेत्यादिवचनेभ्यो विद्यासंयुक्तमप्यस्ति केवलमप्यस्ति तत्रेदं विचार्यते ॥ ७ ॥ ७ ॥

३९६

द्विषतोः स्वसमानजातीयकं कर्म जनयति ॥ स्वयं च ज्ञानान्नश्यतीति भावः ॥ १७ ॥ यदेव विद्ययेति हि ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥

उक्तं नित्यादिकं विषयमुपजीव्य सबीजं संशयमुक्त्वा पूर्वपक्षमाह विद्यासंयुक्तमेवेति अत्र पूर्वपक्षे कर्माङ्गोपास्तिहीनकर्मणो ज्ञानार्थ
त्वासिद्धिः सिद्धान्ते न तत्सिद्धिरिति भेदः भवतु विद्याविशिष्टस्य कर्मणो ज्ञानं प्रति शीघ्रकारित्वाख्यः कश्चिदतिशयो विद्यासामर्थ्यात् नैतावता

किं विद्यासंयुक्तमेवाग्निहोत्रादिकं कर्म मुमुक्षोर्विद्याहेतुत्वेन तया सहैककार्यत्वं प्रतिपद्यते तेन केवलं उत विद्यासंयुक्तं केवलं
चाविशेषेणेति ॥ कुतः संशयः ॥ तमेतमात्मानं यज्ञेन विविदिषन्तीति यज्ञादीनामविशेषेणात्मवेदनाङ्गत्वेन श्रवणाद्विद्यासंयु
क्तस्य चाग्निहोत्रादेर्विशिष्टत्वावगमात् ॥ किं तावत्प्राप्तं ॥ विद्यासंयुक्तमेव कर्माग्निहोत्राद्यात्मविद्याशेषत्वं प्रतिपद्यते न वि
द्याहीनं ॥ विद्योपेतस्य विशिष्टत्वावगमाद्विद्याविहीनात् ॥ यदहरेव जुहोति तदहः पुनर्मृत्युमपजयत्येवं विद्वानित्यादि
श्रुतिभ्यः ॥ बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥ दूरेण ह्यवरं कर्म बुद्धियोगाद्धनंजयेत्यादिस्मृतिभ्यश्चेति ॥ एवं प्रा
प्ते प्रतिपद्यते यदेव विद्ययेति हि सत्यमेतत् विद्यासंयुक्तं कर्माग्निहोत्रादिकं विद्याविहीनात्कर्मणोऽग्निहोत्राद्विशिष्टं वि
द्वानिव ब्राह्मणो विद्याविहीनात् ब्राह्मणात् ॥ तथापि नात्यन्तमनपेक्षं विद्याहीनं कर्माग्निहोत्रादिकं ॥ कस्मात्तमेतमात्मा
नं यज्ञेन विविदिषन्तीत्यविशेषेणाग्निहोत्रादेर्विद्याहेतुत्वेन श्रुतत्वात् ॥ ननु विद्यासंयुक्तस्याग्निहोत्रादेर्विद्याविहीनात्
विशिष्टत्वावगमाद्विद्याविहीनमग्निहोत्राद्यात्मविद्याहेतुत्वेनानपेक्षमेवेति युक्तं नैतदेवं ॥ विद्यासहायस्याग्निहोत्रादे
र्विद्यानिमित्तेसामर्थ्या तिशयेन योगादात्मज्ञानं प्रति कश्चित्कारणत्वातिशयो भविष्यति न तथा विद्याविहीनस्येति युक्तं क
ल्पयितुं ॥ न तु यज्ञेन विविदिषन्तीत्यत्राविशेषेणात्मज्ञानाङ्गत्वेन श्रुतस्याग्निहोत्रादेरनङ्गत्वं शक्यमभ्युपगन्तुं ॥ तथा हि श्रुति
र्यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवतीति विद्यासंयुक्तस्य कर्मणोऽग्निहोत्रादेर्वीर्यवत्तरत्वाभिधानेन
स्वकार्यं प्रति किंचिदतिशयं ब्रुवाणा विद्याविहीनस्य तस्यैव तत्प्रयोजनं प्रति वीर्यवत्त्वं दर्शयति कर्मणश्च वीर्यवत्त्वं तद्यत्स्वप्रयो
केवलस्य वैयर्थ्यं विविदिषाश्रुतिविरोधात् न च तत्र श्रुतौ यज्ञादिशब्दानां विद्योपेतकर्मपरतया संकोचो युक्तः ((जनसाधनप्रसहत्वं ॥

द्वियतोयदेवविद्ययेतिश्रुतिः केवलस्यापिवीर्यवत्त्वगमयतीतिसिद्धान्तयन्ग्रन्थार्थः ॥१८॥ भोगेनत्वितरेक्षपयित्वासंपद्यते॥ नन्वविदत्रविषयःसकिं
प्रारब्धक्षयानंतरंसंसरत्युतनेतिनिमित्तभावाभावाभ्यांसंशयेसिद्धान्तमुपक्रमतेअनारब्धेतिअनारब्धकर्मणःक्षयोक्तावारब्धस्यकथंक्षयइत्याकां
क्षायामस्योत्थानात्संगतिः॥ पूर्वपक्षेविदेहकैवल्यासिद्धिः सिद्धान्तेतत्सिद्धिरितिभेदः॥ देहपातोत्तरमपितत्त्ववित्संसरतिसंसारयोग्यत्वाद्यथादेहपातात्पूर्व

तस्माद्विद्यासंयुक्तंनित्यमग्निहोत्रादिविद्याविहीनंचोभयमपिमुमुक्षुणामोक्षप्रयोजनोद्देशेनेहजन्मनिजन्मान्तरेच।
प्राक्ज्ञानोत्पत्तेः कृतंयत्तद्यथासामर्थ्यंब्रह्माधिगमप्रतिबंधकारणोपात्तदुरितक्षयहेतुत्वद्वारेणब्रह्माधिगमकारण-
त्वंप्रतिपद्यमानंश्रवणमननश्रद्धातात्पर्याद्यंतरंगकारणापेक्षंब्रह्मविद्ययासहैककार्यंभवतीतिस्थितं॥ १३॥ १८॥
भोगेनत्वितरेक्षपयित्वासंपद्यते॥ १९॥ अनारब्धकार्ययोःपुण्यपापयोर्विद्यासामर्थ्यात्क्षयउक्तः॥ इतरेत्वारब्धकार्येपुण्य
पापेउपभोगेनक्षपयित्वाब्रह्मसंपद्यते॥ तस्यतावदेवचिरंयावन्नविमोक्ष्येऽथसंपत्स्यइति॥ ब्रह्मैवसन्ब्रह्माप्येतिइति
चैवमादिश्रुतिभ्यः नतुसत्यपिसम्यक्दर्शनेयथाप्राग्देहपाताद्भेददर्शनंद्विचंद्रदर्शनन्यायेनानुवृत्तंएवंपश्चादप्यनु
वर्तेत॥ ननिमित्ताभावात्॥ उपभोगशेषक्षपणंहितत्रानुवृत्तिनिमित्तं॥ नचतादृशमत्रकिंचिदस्ति॥ ननुचापरःकर्माशयो।
भिनवमुपभोगमारप्स्यते॥ नतस्यदग्धबीजत्वात्॥ मिथ्याज्ञानावष्टंभंहिकर्मांतरंदेहपातेउपभोगांतरमारभते॥ तच्च
मिथ्याज्ञानंसम्यक्ज्ञानेनदग्धमिति अतःसाध्वेतदारब्धकार्यक्षयेविदुषःकैवल्यमवश्यंभवतीति॥ १६॥ भोगा
धिकरणं॥ १४॥ इतिशारीरकमीमांसाभाष्येचतुर्थाध्यायस्यप्रथमःपादःसमाप्तः॥

॥ मित्यनारब्धाधिकरणदृष्टांते
नपूर्वपक्षमाह॥ नन्विति॥ भोगनिमित्तकर्माभावाद्देहसिद्धिःयत्तुसंचितंकर्मांतरंतच्चनिमित्तंफलस्यदग्धमूलत्वात्॥ अविद्यादयोहिक्लेशाःकर्म
णास्तत्फलस्यचमूलंतदुक्तंयोगशास्त्रेक्लेशमूलःकर्माशयःसतिमूलेतद्विपाकइतितच्चमूलंज्ञानाग्निनादग्धमितिकुतःपुनःसंसारस्तस्माद्देहपातेकै
वल्यमितिसिद्धं॥ १९॥ इतिश्रीमत्परमहंसपरिव्राजकाचार्यश्रीगोविंदानंदभगवत्कृतौभाष्यरत्नप्रभायांचतुर्थस्याध्यायस्यप्रथमःपादःसमाप्तः॥

श्रीगणेशाय नमः॥ वाङ्मनसि दर्शनाच्छब्दाच्च॥ ज्ञानफलोक्त्यनन्तरमुपासनफलं ब्रह्मलोकस्थं वक्तव्यं तच्चार्चिरादिमार्गप्राप्यं मार्गप्राप्तिश्चोत्क्रान्तिसा
ध्या तस्मादुपास्तिफलाप्तिप्रोत्क्रान्तिपादस्यास्य ध्यायसंगतिः युक्तं चास्य पूर्वपादानन्तर्यं ज्ञानफलोक्त्यनन्तरं वक्तव्योपास्तिफलेनासन्नत्वादित्याह
॥अथेति॥ ज्ञानिन इवोपासकस्याप्युत्क्रान्तिर्नेत्यत आह॥ समानेति विद्वानुपासकः तस्यानुपासकवदुत्क्रान्तिरस्ति अनन्तत्वादिति वक्ष्यत इत्यर्थः॥ मय

॥वाङ्मनसि दर्शनाच्छब्दाच्च॥१॥ अथापरासु विद्यासु फलप्राप्तये देवयानं पन्थानमवतारयिष्यन्प्रथमं तावद्यथाशास्त्रमुत्क्रा
न्तिक्रममन्वाचष्टे॥ समाना हि विद्वदविदुषोरुत्क्रान्तिरिति वक्ष्यति॥ अस्ति प्रायणविषया श्रुतिः॥ अस्य सोम्य पुरुषस्य प्रय
तो वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायामिति॥ किमिह वाच एव वृत्तिमत्या मनसि संप
त्तिरुच्यत उत वाग्वृत्तेरिति विशयः॥ तत्र वागेव तावन्मनसि संपद्यत इति प्राप्तं॥ तथा हि श्रुतिरनुगृहीता भवति इतरथा
लक्षणा स्यात्॥ श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या न लक्षणा॥ तस्माद्वाच एवायं मनसि प्रलय इति॥ एवं प्राप्ते ब्रूमः
वाग्वृत्तिर्मनसि संपद्यत इति॥ कथं वाग्वृत्तिरिति व्याख्यायते यावता वाङ्मनसीत्येव आचार्यः पठति॥ सत्यमेतत्पठिष्य
ति तु परस्तादविभागो वचनादिति॥ तस्मादत्र वृत्त्युपशममात्रं विवक्षितमिति गम्यते॥ तत्त्वप्रविलयविवक्षायां तु सर्वत्रै
वाविभागसाम्यात्किं परत्रैव विशिंष्यादविभाग इति॥ तस्मादत्र वृत्त्युपसंहारविवक्षायां वाग्वृत्तिः पूर्वमुपसंह्रियते मनो
वृत्ताववस्थितायामित्यर्थः॥ कस्माद्दर्शनात्॥ दृश्यते हि वाग्वृत्तेः पूर्वोपसंहारो मनोवृत्तौ विद्यमानायां न तु वाच एव वृत्तिमत्या
मनस्युपसंहारः केनचिदपि द्रष्टुं शक्यते॥ ननु श्रुतिसामर्थ्याद्वाच एवायं मनस्यप्ययो युक्त इत्युक्तं नेत्याह॥ ॥ नो म्रियमाणस्येत्य

र्थः॥ वाक्पदस्य करणभावव्युत्पत्तिभ्यां करणतद्वृत्त्योर्लयभानात्संशयः॥ पूर्वपक्षे करणानां स्वरूपलयान्मृतमात्रस्य मुक्तिः॥ सिद्धान्ते तु संसारसिद्धिः
॥ अनुपादाने मनसि वाचस्तत्त्वलयायोगेन व्यापारमात्रोपशमादिति विवेकः॥ सूत्रे वृत्तिपदाध्याहारः कथमिति शङ्कते॥ कथमिति उत्तरत्र हि सू
त्रकृत्तत्त्वविदिन्द्रियाणां स्वरूपलयं वक्ष्यति न तद्वदिहाध्याहार उचितः॥ अज्ञस्यापीन्द्रियलयसाम्ये वक्ष्यमाणविशेषोक्त्ययोगादिति समाध्यर्थः

प्रकृतावेवविकारलयइतिन्यायविरुद्धार्थश्रुतिरपिनश्रूतइति सिद्धांतयति॥ अतत्प्रकृतित्वादिति॥ न्यायस्यनिरवकाशत्वाद्गलीयस्त्वंश्रुतस्यतु
किंवागितिश्रुतस्याललक्षणयावासावकाशत्वमितियोतयितुंशब्दाच्चेत्युक्तं॥ १॥ वाच्युक्तंन्यायंचक्षुरादिष्वतिदिशत्यतएवेतिउपशांततेजोः
तस्मादुत्क्रमणादूर्ध्वंपुनर्भवंप्रतिपद्यतइत्यर्थः इंद्रियशब्दस्यश्रुतिस्थस्यवृत्तिपरतयोपपत्तेः सर्वेंद्रियवृत्तिलयश्चेदिष्टस्तर्हिवाङ्मनसीतिपृथ

अतत्प्रकृतित्वात्॥ यस्याद्धियतउत्पत्तिस्तस्यतत्रप्रलयोन्याय्यः॥ मृदीवशरावस्य॥ नचमनसोवागुत्पद्यतइतिकिंचनप्रमा
णमस्ति॥ वृत्युद्भवाभिभवौतुप्रकृतिसमाश्रयावपिदृश्येते॥ पार्थिवेभ्योहींधनेभ्यस्तैजसस्याग्नेर्वृत्तिरुद्भवति॥ अप्सुचोपशा
म्यति॥ कथंतर्ह्यस्मिन्पक्षेशब्दोवाङ्मनसिसंपद्यतइतिअतआह॥ शब्दाच्चेति॥ शब्दोप्यस्मिन्पक्षेवृत्तिवृत्तिमतोर
भेदोपचारादित्यर्थः॥ १॥ अतएवचसर्वाण्यनु ॥ २॥ तस्मादुपशांततेजाःपुनर्भवमिंद्रियैर्मनसिसंपद्यमानैरित्यत्राविशेषे
णसर्वेषामेवेंद्रियाणांमनसिसंपत्तिःश्रूयते॥ तत्रापिअतएववाचइवचक्षुरादीनामपिसवृत्तिकेमनसिअवस्थितेवृत्तिलोपद
र्शनात्तत्वप्रलयासंभवात्॥ शब्दोपपत्तेश्चवृत्तिद्वारेणैवसर्वाणींद्रियाणिमनोनुवर्तंते॥ सर्वेषांकरणानांमनस्युपसंहाराவि
शेषेसतिवाचःपृथग्ग्रहणंवाङ्मनसिसंपद्यतइत्युदाहरणानुरोधेन ॥२॥२॥ तन्मनःप्राणउत्तरात्॥ ३ समधिगतमेतद्वा
ङ्मनसिसंपद्यतइत्यत्रवृत्तिसंपत्तिविवक्षेति॥ अथयदुत्तरंवाक्यंमनःप्राणइतिकिमत्रापिवृत्तिसंपत्तिरेवविवक्ष्यतेउततद्वृ
त्तिमत्संपत्तिरितिविचिकित्सायांवृत्तिमत्संपत्तिरेवात्रेतिप्राप्तं॥ श्रुत्यनुग्रहात्॥ तत्प्रकृतित्वोपपत्तेश्च॥ तथाहिअन्नमयंहि
सोम्यमनआपोमयःप्राणइत्यन्नयोनिमनआमनंत्यप्योनिंचप्राणं॥ आपश्चान्नमसृजंतेतिश्रुतिः अतश्चयन्मनःप्रा
णेप्रलीयतेअन्नमेवतदप्सुप्रलीयते अन्नंहिमनः आपश्चप्राणःप्रकृतिविकाराभेदादिति॥ एवंप्राप्तेब्रूमः॥ ६ ॥

वसूत्रंकिमर्थमित्यतआह सर्वेषांकरणानामिति॥ २॥ तन्मनःप्राणउत्तरात्वाक्यक्रमादर्थक्रमाच्चाधिकरणक्रमःश्रुतिन्यायाभ्यांसंशयःपूर्वप्रवत्व
न्यायविरोधाद्वागितिश्रुतेर्बाधः अतःइहतत्वान्मकप्राणस्यान्नात्मकमनःप्रकृतित्वेनप्रकृतौविकारलयइतिन्यायानुग्रहान्नमनःश्रुतिर्बाध्येतिपू

ब्र०सू०भा०अ०४पा०२ ॥ १२

शा.भा.
टी.
र.प्र.
३९९

सिद्धान्तस्त्वनयोः प्रकृतिविकृतिभावेऽपि न तद्विकारयोः प्राणमनसोस्तद्भावो हिमघटयोरपि तद्भावप्रसंगादतो न्यायविरोधात्पूर्ववत् श्रुतिर्वोध्येति विवेकः ॥ अगृहीतावाह्येन्द्रियवृत्तयो येन तत्तथा लीनेन्द्रियवृत्तिकं मनोऽपि वृत्तिलयेनैव प्राणे लीयत इत्यर्थः ॥ एवमपीति प्राणस्याविकारत्वपक्षेऽपीत्यर्थः तस्मादिति प्राणस्य साक्षान्मनः प्रकृतित्वाभावान्मनः शब्दो वृत्तिलक्षक इत्यर्थः ॥ ३ ॥ सोऽध्यक्षस्तदुपगमादिभ्यः उक्तन्यायसिद्धं प्राणस्यापि

तदप्यगृहीतवाह्येन्द्रियवृत्ति मनो वृत्तिद्वारेणैव प्राणे प्रलीयत इति उत्तराद्वाक्यादवगन्तव्यं ॥ तथाहि सुषुप्सोर्मुमूर्षोश्च प्राणवृत्तौ परिस्पन्दात्मिकायामवस्थितायां मनोवृत्तीनामुपशमो दृश्यते ॥ न च मनसः ॥ स्वरूपाप्ययः प्राणे संभवति अतत्प्रकृतित्वात् ॥ ननु दर्शितं मनसः प्राणप्रकृतित्वं ॥ नैतत्सारं ॥ नहीदृशेन प्रणाडिकेन तत्प्रकृतित्वेन मनः प्राणे संपत्तुमर्हति ॥ एवमपि ह्यन्ने मनः संपद्येतात्सु चान्नमप्स्वेव च प्राणः ॥ नह्येतस्मिन्नपि पक्षे प्राणभावपरिणताभ्योऽद्भ्यो मनो जायत इति किंचन प्रमाणमस्ति ॥ तस्मान्न मनसः प्राणे स्वरूपाप्ययः ॥ वृत्त्यप्ययेऽपि तु शब्दोऽवकल्पते वृत्तिवृत्तिमतोरभेदोपचारादिति दर्शितं ॥ ७ ॥ ७ ॥ ॥ ७ ॥ २।३॥ सोऽध्यक्षस्तदुपगमादिभ्यः ॥ ४ ॥ स्थितमेतद्यस्य यतो नोत्पत्तिस्तस्य तस्मिन्वृत्तिप्रलयो न स्वरूपप्रलय इति ॥ इदमिदानीं प्राणस्तेजसीत्यत्र चिन्त्यते ॥ किं यथाश्रुति प्राणस्य तेजस्येव वृत्त्युपसंहारः किं वा देहेन्द्रियपंजराध्यक्षे जीव इति ॥ तत्र श्रुतेरनतिशङ्क्यत्वात् प्राणस्य तेजस्येव संपत्तिः स्यात् ॥ अश्रुतकल्पनाया अन्याय्यत्वादिति ॥ एवं प्राप्ते प्रतिपद्यते ॥ सोऽध्यक्ष इति ॥ स प्रकृतः प्राणः अध्यक्षे विद्याकर्मपूर्वप्रज्ञोपाधिके विज्ञानात्मन्यवतिष्ठते तत्प्रधाना प्राणवृत्तिर्भवतीत्यर्थः ॥ कुतः तदुपगमादिभ्यः ॥ एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति ॥ यत्रैतदूर्ध्वोच्छ्वासी भवतीति हि श्रुत्यन्तरमध्यक्षोपगा

वृत्तित्वमुपजीव्य प्राणस्तेजसीति श्रुतेरुपगमादिश्रुतेश्च संशयमुक्त्वा जीवे लयं विनापि उपगमादि संभवदिति पूर्वपक्षयति स्थितमित्यादिना ॥ अत्र तेजः शब्दस्य मुख्यत्वं सिद्धान्तेऽनुभूतोपहितजीवलक्षकत्वमिति मत्वा सूत्रं योजयति स प्रकृत इत्यादिना ज्ञानकर्मवासनोपाधिक इत्यर्थः ॥ तं जीवं प्रति प्राणानामुपगमानुगमनावस्थानश्रुतिभ्य इति हेत्वर्थः ॥ यथा यात्रेच्छावन्तं राजानं भृत्या उपगच्छन्त्येवमेव परलोकजिगमिषुं जीवं सर्वे प्राणा अभि

अ.पा.
४।२

नमुत्क्रामंतमित्यनुगमनं श्रुतं जीवे प्राणावस्थानं श्रुतिमाह स विज्ञान इति ॥ जीवस्य प्राग्व्यक्तावगमाय हि विज्ञानसाहित्यश्रुत्या मुख्यप्राणसहितकर
णानां जीवे स्थितिर्भातीत्यर्थः ॥ ४ ॥ यद्यपि प्राणस्य तेजस्यव्यवधानेन लयः श्रुतस्तथाप्युभयश्रुत्यनुग्रहाय प्राणो जीवे लीयते जीवद्वारा च तदुपाधिषु ते-
ज आदिभूतेष्विति श्रुत्यर्थस्फुटीकरणार्थं सूत्रं गृह्णाति कथं तर्हीति न च लयं विनापि जीवं मत्युपगमादिसंभवात्तेजःश्रुतिर्मुख्यास्त्विति वाच्यं जीवे प्रत्या

सर्वान्प्राणान्न विशेषेण दर्शयति ॥ विशेषेण च तमुत्क्रामंतं प्राणोनूत्क्रामतीति पंचवृत्तेः प्राणस्याध्यक्षानुगामितां दर्शयति ॥ त
दनुवृत्तितां चेतरेषां ॥ प्राणमनूत्क्रामंतं सर्वे प्राणा अनूत्क्रामंतीति ॥ सविज्ञानो भवतीति चाध्यक्षस्यांतर्विज्ञानवत्त्वप्रदर्शनेन तत्स्थि
त्यपीतकरणग्रामस्य प्राणस्यावस्थानं गमयति ॥ ननु प्राणस्तेजसीति श्रूयते कथं प्राणोध्यक्ष इत्यधिकावापः क्रियत इत्येष दोषः ॥
अध्यक्षप्रधानत्वादुत्क्रमणादिव्यवहारस्य ॥ श्रुत्यंतरगतस्यापि च विशेषस्यापेक्षणीयत्वात् ॥ ४ ॥ कथं तर्हि प्राणस्तेजसीति श्रुति
रित्यत आह ॥ भूतेषु तच्छ्रुतेः ॥ स प्राणसंपृक्तोऽध्यक्षस्तेजःसहचरितेषु भूतेषु देहबीजभूतेषु सूक्ष्मेष्ववतिष्ठत इत्यवगंतव्यं ॥ प्रा
णस्तेजसीत्यतः श्रुतेः ॥ ननु चेयं श्रुतिः प्राणस्य तेजसि स्थितिं दर्शयति न प्राणसंपृक्तस्याध्यक्षस्य ॥ नैष दोषः ॥ सोऽध्यक्ष इत्यध्यक्ष
स्याप्यंतराले प्युपसंख्यातत्वात् ॥ योपि हि स्रुघ्नान्मथुरां गत्वा मथुरायाः पाटलिपुत्रं व्रजति सोपि स्रुघ्नात्पाटलिपुत्रं यातीति शक्यते
वदितुं ॥ तस्मात्प्राणस्तेजसीति प्राणसंपृक्तस्याध्यक्षस्यैव तत्तेजःसहचरितेषु भूतेष्ववस्थानं ॥ ५ ॥ कथं तेजःसहचरितेषु भूतेष्वि
त्युच्यते यावतैकमेव तेजः श्रूयते प्राणस्तेजसीत्यत आह ॥ नैकस्मिन्दर्शयतो हि ॥ ६ ॥ नैकस्मिन्नेव तेजसि शरीरांतरप्रेप्सावेला
यां जीवो वतिष्ठते ॥ कार्यस्य शरीरस्यानेकात्मकत्वदर्शनात् ॥ दर्शयतश्चैतमर्थं प्रश्नप्रतिवचने ॥ आपः पुरुषवचस इति तद्व्याख्या
तं त्र्यात्मकत्वात्तु भूयस्त्वादित्यत्र ॥ श्रुतिस्मृती चैतमर्थं दर्शयतः श्रुतिः पृथिवीमय आपोमयो वायुमय आकाशमयस्तेजोमय इ

गत्य प्राणस्य निर्व्यापारत्वेन स्थितेरेवात्र लयत्वादिति भावः ॥ भूतेषु जीवस्य स्थितिः किं बलाद्व्याख्यायत इत्याशंक्य सोऽध्यक्ष इति सूत्रोदाहृतश्रुतिबलादि
त्याह नन्वित्यादिना प्राणस्य जीवद्वारा भूतप्राप्तौ दृष्टांतमाह योपीति स्थूलदेहारंभाय पंचीकृतभूतान्यावश्यकानीति रंहत्यधिकरणे व्याख्यातं ॥ ६ ॥

अण्व्यः सूक्ष्मा मीयंते इति मात्राः परिछिन्नाः आ कूमोक्षादविनाशिन्यो दशार्धानां पंचानां भूतानां सूक्ष्मभागा इति यावत्॥ जीवस्य भूताश्रयत्वं कर्माश्र
यत्वश्रुतिविरुद्धमित्याशंक्य कर्मनिमित्तत्वेनाश्रयः भूतानि तु देहोपादानत्वेनेत्युभयमविरुद्धमित्याह॥ ननु चेत्यादिना नैयायिकत्वस्थाने भागो यज्जीव
यत्वश्रुतिविरुद्धमित्याशंक्य ... ॥ ६॥ एवं वाह्येंद्रियाणां मनसि प्रथमं वृत्तिलयलाभात्ततो मनोवृत्तेः प्राणे लयः प्राणवृत्तेर्भूतोपहितजीवे लय।
धारमूवत्तुस्तत्कर्मैति श्रुतेर्वचनं॥ ६॥ एवं वाह्येंद्रियाणां मनसि प्रथमं

स्मृतिरपि॥ अण्वो मात्रा अविनाशिन्यो दशार्द्धानां तु याः स्मृताः॥ ताभिः सार्द्धमिदं सर्वं संभवत्यनुपूर्वश इत्याद्या॥ ननु चोपसंहृतेषु
वागादिषु करणेषु शरीरांतरप्रेप्सावेलायां क्वायं तदा पुरुषो भवतीत्युपक्रम्य श्रुत्यंतरं कर्माश्रयतां निरूपयति तौ ह यदूचतुः कर्म है
व तदूचतुरथ यत्प्रशशंसतुः कर्म हैव तत्प्रशशंसतुरिति॥ अत्रोच्यते॥ तत्र कर्मप्रयुक्तस्य ग्रहातिग्रहसंज्ञकस्येंद्रियविषयात्म
कस्य बंधनस्य प्रवृत्तिरिति कर्माश्रयतोक्ता इह पुनर्भूतोपादानाद्देहांतरोत्पत्तिरिति भूताश्रयत्वमुक्तं॥ प्रशंसाशब्दादपि तत्र
प्राधान्यमात्रं कर्मणः प्रदर्शितं॥ न त्वाश्रयांतरं निवारितं तस्मादविरोधः॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ३॥ ६॥ समाना चासृत्यु
पक्रमादमृतत्वं चानुपोष्य॥ ७॥ सेयमुत्क्रांतिः किं विद्वदविदुषोः समाना किं वा विशेषवतीति विशयानानां विशेषवतीति ताव
त्प्राप्तं॥ भूताश्रयविशिष्टा ह्येषा॥ पुनर्भवाय च भूतान्याश्रीयंते न च विदुषः पुनर्भवः संभवति॥ अमृतत्वं हि विद्वानश्नुत इ
ति स्थितिः तस्मादविदुष एवैषोत्क्रांतिः॥ ननु विद्याप्रकरणे समाम्नानाद्विदुष एवैषा भवेत्॥ न स्वापादिवद्यथाप्राप्तानुकीर्त
नात्॥ तथा हि यत्रैतत्पुरुषः स्वपिति नाम अशिशिषति नाम पिपासति नाम इति च सर्वप्राणिसाधारणा एव स्वापादयोऽनुकीर्त्यं
ते विद्याप्रकरणेपि प्रतिपिपादयिषितवस्तुप्रतिपादनानुगुण्येन न तु विदुषो विशेषवंतो विधित्स्यंते॥ एवमियमप्युत्क्रांतिर्महा
जनगतैवानुकीर्त्यते॥

इत्युक्तां तिष्यवस्थोक्ता सा च सर्वप्राणिषु तुल्येत्याह॥ समाना चासृत्युपोष्य॥ पुरुषस्य प्रयतो वाङ्मनसि संपद्यत इति श्रुतेः॥ इत्युक्त्वा विशेषत्पत्तौ (?) पूर्वपक्षे सगुणब्रह्मविद्संबंधित्वमुत्क्रांतेर्विशेषः साध्य
विद्यया मृतमश्नुत इति श्रुतेश्च संशयमाह॥ सेयमिति॥ विशयानानां संदिहानानामित्यर्थः पूर्वपक्षे सगुणब्रह्मविद्संबंधित्वमुत्क्रांतेर्विशेषः साध्य
तेनातोनुत्क्रांत उपासको मुक्तिमश्नुत इति फलं सिद्धांते तूत्क्रांतो ब्रह्मलोकभागीति फलभेदः॥ पूर्वपक्षमाक्षिप्य समाधत्ते ननु विद्येत्यादिना॥ ६ ॥

विद्ययामृतमिति श्रुतिर्निर्गुणविद्यावन्परानतस्यप्राणाउत्क्रामंतीति प्रतिषेधोपि तद्विषयः अतः सगुणविदोप्युत्क्रांतिरिति सिद्धांतयति॥ एवमितिसू
निर्गतेसत्येपक्रमोर्चिःप्राप्तिस्तनः साकतीउत्क्रांतिस्तुल्या न तउपासकोमूर्धन्यनाडीद्वारार्चिरादिमार्गप्राप्तोमिनान्यइतिविशेषः॥ यत्तुइहरोपासकस्याः

यस्यां परस्यां देवतायां पुरुषस्य प्रयतस्तेजः संपद्यते स आत्मा तत्त्वमसीति प्रतिपादयितुं॥ प्रतिषिद्धा चैषा विदुषः न तस्य प्राणा उ
त्क्रामंतीति॥ तस्मादविदुष एवैषेति॥ एवं प्राप्ते ब्रूमः॥ समाना चैषोत्क्रांतिर्वाङ्मनसीत्याद्याविद्वदविदुषोरासृत्युपक्रमाद्भवितु
मर्हति॥ अविशेषश्रवणात्॥ अविद्वान्देहबीजभूतानि भूतसूक्ष्माण्याश्रित्य कर्मप्रयुक्तो देहग्रहणमनुभवितुं संसरति॥ विद्वांस्तु
ज्ञानप्रकाशितं मोक्षनाडीद्वारमाश्रयते तदेतदासृत्युपक्रमादित्युक्तं॥ नन्वमृतत्वं हि विदुषा प्राप्तव्यं न च तद्देशांतरायत्तं तत्र कुतो
भूताश्रयत्वं सृत्युपक्रमो वेति॥ अत्रोच्यते॥ अनुपोष्य चेदमदग्ध्वात्यंतमविद्यादीन् क्लेशानपरविद्यासामर्थ्यादापेक्षिकममृ
तत्वं प्रेप्सते॥ संभवति सृत्युपक्रमो भूताश्रयत्वं च॥ न हि निराश्रयाणां प्राणानां गतिरुपपद्यते तस्माददोषः॥७॥४॥ तदापीतेः
संसारव्यपदेशात्॥८॥ तेजःपरस्यां देवतायामित्यत्र प्रकरणसामर्थ्यात्तद्यथाप्रकृतं तेजः साध्यक्षं सप्राणं सकरणग्रामं भूता
न्तरसहितं प्रयतः पुंसः परस्यां देवतायां संपद्यत इत्येतदुक्तं भवति॥ कीदृशी पुनरियं संपत्तिः स्यादिति चिंत्यते॥ तत्रात्यंतिक ए
व तावत्स्वरूपप्रविलय इति प्राप्तं तत्प्रकृतित्वोपपत्तेः॥ सर्वस्य हि जनिमतो वस्तुजातस्य प्रकृतिः परा देवतेति प्रतिष्ठापितं॥ तस्मा
दात्यंतिकोयमविभागापत्तिरिति॥ एवं प्राप्ते ब्रूमः॥ तत्तेज आदिभूतसूक्ष्मं श्रोत्रादिकरणाश्रयभूतमापीतेः आसंसारमोक्षात्सम्य
ग्ज्ञाननिमित्तादवतिष्ठते योनिमन्ये प्रपद्यंते शरीरत्वाय देहिनः॥ स्थाणुमन्येनुसंयंति यथाकर्म यथाश्रुतमित्यादिसंसारव्यप
देशात्॥ अन्यथा हि सर्वः प्रायणसमय एवोपाधिप्रत्यस्तमयादात्यंतिकं ब्रह्म संपद्येत॥ तत्र विधिशास्त्रमनर्थकं स्यात्॥ मृतत्वंश्रुतेंनतयो

र्ध्वमायन्नमृतत्वमेतीति तदापेक्षिकमेव तन्मुख्यं यं कामं कामयते सोस्य संकल्पादेव समुत्तिष्ठतीति भोगश्रवणादित्याह॥ अनुपोष्य चेदमिति उषदाह इति
धानेरिदंरूपं॥७॥ तदापीतेः॥ पूर्वोदाहृतोत्क्रांतिवाक्यशेषं व्याख्याय लिंगाश्रयपंचभूतानां किमात्यंतिको ब्रह्मणि लय उतानात्यंतिक इति तत्र स्योभयथा

शा॰ भा॰ टी॰ र॰ प्र॰ ५०१

अ॰ पा॰ ४।२

पूर्वपक्षे मृतमात्रस्य मुक्तिसिद्धिः सिद्धान्ते तु कर्मविद्याशास्त्रबलात्सावशेषलयसिद्धिरिति विवेकः ॥८॥ ननु लिंगात्मकस्य तेजसः कथं सूक्ष्मत्वम नाडीद्वारा गतिः कुतो वा केनचिन्मूर्तेन प्रतिघातो नास्ति कुतो वा न दृश्यत इत्यत आह सूक्ष्ममिति प्रमाणतोऽस्माद्गतिरनुद्भूतस्पर्शरूपत्वात्स्वच्छत्वाद्प्रतिघातानुपलब्धिरित्यर्थः ॥९॥१०॥ लिंगसद्भावे चौष्म्यलिंगकानुमानमाह ॥ अस्यैव चेति ॥११॥ प्रतिषेधादिति चेन्न शारीरात् ॥ पूर्वमनुपोष्येति पदेन दग्धाशेषक्लेश

विद्याशास्त्रं च ॥ मिथ्याज्ञाननिमित्तस्य बंधो न सम्यग्ज्ञानादृते विस्रंसितुमर्हति ॥ तस्मात्तत्त्वज्ञमितेपि सुषुप्तप्रलयवत्सबीजभावावशेषैवैषा संपत्तिरिति ॥८॥ सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥९॥ तच्चेतरभूतसहितं तेजो जीवस्य अस्माच्छरीरात्प्रवसत आश्रयभूतं स्वरूपतः परिमाणतश्च सूक्ष्मं भवितुमर्हति ॥ तथा हि नाडीनिःक्रमणश्रवणादिभ्योऽस्य सौक्ष्म्यमुपलभ्यते तत्र तनुत्वात्संचारोपपत्तिः स्वच्छत्वाच्चाप्रतिघातोपपत्तिरत एव च देहान्निर्गच्छन्पार्श्वस्थैर्नोपलभ्यते ॥९॥ नोपमर्देनातः ॥१०॥ अत एव सूक्ष्मत्वान्नास्य स्थूलस्य शरीरस्योपमर्देन दाहादिनिमित्तेनेतरत्सूक्ष्मं शरीरमुपमृद्यते ॥१०॥ अस्यैव चोपपत्तेरेष ऊष्मा ॥११॥ अस्यैव च सूक्ष्मस्य शरीरस्यैष ऊष्मा ॥ यमेतस्मिञ्छरीरे संस्पर्शेनोष्माणं विजानाति ॥ तथा हि मृतावस्थायामवस्थितेपि देहे विद्यमानेष्वपि च रूपादिषु देहगुणेषु नोष्मोपलभ्यते ॥ जीवदवस्थायामेव तूपलभ्यत इत्यत उपपद्यते प्रसिद्धशरीरव्यतिरिक्तव्यपाश्रय एवैष ऊष्मेति ॥ तथा च श्रुतिः ॥ उष्ण एव जीविष्यञ्छीतो मरिष्यन्निति ॥ ७ ॥ ७ ॥ ७ ॥५॥११॥ प्रतिषेधादिति चेन्न शारीरात् १२ अमृतत्वं चानुपोष्येत्यतो विशेषणादन्तिकेऽमृतत्वे गत्युत्क्रान्त्योरभावाभ्युपगमः ॥ तत्रापि केनचित्कारणेनोत्क्रान्तिमाशंक्य प्रतिषेधति ॥ अथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो भवति न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन्ब्रह्माप्येतीत्यतः परविद्याविषयात्प्रतिषेधान्न परब्रह्मविदो देहात्प्राणानामुत्क्रान्तिरस्तीति चेत् ॥ ९स्य निर्गुणज्ञानित उत्क्रान्त्याद्यभावः सूचितस्तस्यात्र

क्षिप्य समाधानात्त्व्यवहितेनास्य संगतिरित्याह ॥ अमृतत्वं चेति ॥ सकामस्य संसारो तत्यनंतरं निष्कामस्य मुक्तिप्रकरणार्थो यशब्दः ॥ आत्मकामत्वात्पूर्णानंदात्मवित्त्वादाप्तकामः प्राप्तपरमानंदः अतो निष्कामः अनभिव्यक्तान्तरवासनात्मककामशून्यस्तस्मादकामः व्यक्तबहिष्कामरहितः ईदृशो यो

ज्ञानिन उत्क्रान्तिरस्त्युत नेति पंचमीषष्ठीश्रुतिभ्यां संदेहे सिद्धान्तिशंकानिरासपूर्वकं पूर्वपक्षयति॥ नेत्यादिना॥ काण्वश्रुतौ तावत्तस्येति सर्वनाम्ना प्रकृतं ज्ञानिनं परामृश्य संबंधसामान्यमुक्तं तत्र माध्यंदिनशाखायां तस्मादित्यपादानत्वरूपविशेष उक्तो ग्राह्यस्तथा च जीवात्प्राणोत्क्रान्तिप्रतिषेधो भाति न देहात्तच्छेदे न देहस्यानुक्तेस्तस्मान्ज्ञानिनोप्युत्क्रान्तिरस्तीति ज्ञानवैयर्थ्यमिति पूर्वपक्षफलं॥ १२॥ सिद्धान्तेन तात्पर्यमाह स्पष्टो

मेत्युच्यते॥ यतः शारीरादात्मन एष उत्क्रान्तिप्रतिषेधः प्राणानां न शरीरात्॥ कथमवगम्यते॥ न तस्मात्प्राणा उत्क्रामंतीति शाखांतरे पंचमीप्रयोगात् संबंधसामान्यविषया हि षष्ठी शाखांतरगतया पंचम्या संबंधविशेषे व्यवस्थाप्यते॥ तस्मादिति च प्राधान्यादभ्युदयनिःश्रेयसाधिकृतो देही संबध्यते न देहः॥ न तस्मादुच्चिक्रमिषोर्जीवात्प्राणा अपक्रामंति सहैव तेन भवंतीत्यर्थः॥ १२॥ सप्राणस्य च प्रवसतो भवत्युत्क्रान्तिर्देहादित्येवं प्राप्ते प्रत्युच्यते॥ स्पष्टो ह्येकेषां॥ १३॥ नैतदस्ति यदुक्तं परब्रह्मविदोपि देहादस्त्युत्क्रान्तिः प्रतिषेधस्य देह्यपादानत्वादिति॥ यतो देहापादान एवोत्क्रान्तिप्रतिषेध एकेषां समाम्नातॄणां स्पष्ट उपलभ्यते॥ तथा हि आर्तभागप्रश्ने॥ यत्रायं पुरुषो म्रियत उदस्मात्प्राणाः क्रामंत्याहो नेति नेति होवाच याज्ञवल्क्य इत्यनुत्क्रान्तिपक्षं परिगृह्य न तर्ह्ययमनुत्क्रान्तेषु प्राणेषु म्रियत इत्यस्यामाशंकायामत्रैव समवनीयंत इति प्रविलयं प्राणानां प्रतिज्ञाय तत्सिद्धये स उच्छ्वयत्याध्मायत्याध्मातो मृतः शेत इति सशब्दपरामृष्टस्य प्रकृतस्योत्क्रान्त्यवधेरुच्छ्वयनादीनि समामनंति॥ देहस्य चैतानि स्युर्न देहिनस्तत्सामान्यान्न तस्मात्प्राणा उत्क्रामंति अत्रैव समवनीयंत इत्यत्राप्यभेदोपचारेण देहापादानस्यैवोत्क्रमणस्य प्रतिषेधो यद्यपि प्राधान्यं देहिन इति व्याख्येयं येषां पंचमीपा

ठीति॥ अत्र पुरुषशब्दवाच्यो देह एवास्मादित्युत्क्रान्त्यवधिरुच्यते सशब्दपरामृष्टस्य प्रकृतस्य पुरुषस्योच्छ्वयनादिधर्मकस्य जीवत्वायोगादित्यर्थः॥ उच्छ्वयति बाह्यवायुपूरणाद्वर्धते॥ आध्मायति॥ आर्द्रभेरीवच्छब्दं करोतीत्यर्थः येषां पंचमीपाठस्तेषां यद्यपि देहिनः प्राधान्यं तथापि देहदेहिनोरभेदात्तस्मादिति देहं परामृश्य तदपादान एवोत्क्रान्तिप्रतिषेध इति व्याख्येयं तत्सामान्यादुक्तश्रुत्योः पाठस्यैकार्थत्वादिति योजना

इदानीं काण्वपाठस्यानुगुण्यमाह ॥ येषां तु षष्ठीपाठ इति ॥ संबंधविशेषाकांक्षायां भोक्तृप्राणानां भोगोपकरणत्वविशेषोऽत्रैव प्राणमयो मनोमय
इति पूर्वश्रुत्युक्तो ग्राह्यः न श्रुत्यंतरस्थमपादानत्वं ग्राह्यं जीवादुत्क्रांतेरप्राप्तायाः प्रतिषेधायोगादतो विदुषस्संबंधिप्राणानां उत्क्रांत्यपादानापेक्षायां चक्षुषो
वा मूर्ध्नो वेत्युक्तदेहप्रदेशा एव ग्राह्याः तथा चायमर्थः तस्य विदुषो भोगोपकरणात्मकाः प्राणाः देहप्रदेशेभ्यो नोत्क्रामंतीति एवं च प्राप्तोत्क्रांतिनिषेधार्थे

येषां तु षष्ठीपाठस्तेषां विद्वत्संबंधिन्युत्क्रांतिः प्रतिषिध्यत इति प्राप्तोत्क्रांतिप्रतिषेधार्थत्वादस्य वाक्यस्य देहापादानैव सा प्रतिषि-
द्धा भवति देहादुत्क्रांतिः प्राप्ता न देहिनः ॥ अपि च चक्षुषो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्यस्तमुत्क्रामंतं प्राणोऽनूत्क्रामति प्राणम-
नूत्क्रामंतं सर्वे प्राणा अनूत्क्रामंतीत्येवमविद्वद्विषयं सप्रपंचमुत्क्रमणं संसारगमनं च दर्शयित्वा इति तु कामयमान इत्युपसंहृत्य
विद्वत्कथामथाकामयमान इति व्यपदिशति विद्वांसं ॥ यदि च तद्विषयेऽप्युत्क्रांतिमेव प्रापयेदसमंजस एव व्यपदेशः स्यात् ॥ त-
स्मादविद्वद्विषये प्राप्तयोर्गत्युत्क्रांत्योर्विद्वद्विषये प्रतिषेध इत्येवमेव व्याख्येयं व्यपदेशार्थवत्त्वाय ॥ न च ब्रह्मविदः सर्वगत
ब्रह्मात्मभूतस्य प्रक्षीणकामकर्मण उत्क्रांतिर्गतिर्वा उपपद्यते ॥ निमित्ताभावात् ॥ अत्र ब्रह्म समश्नुत इति चैवंजातीयकाः श्रु-
तयो गत्युत्क्रांत्योरभावं सूचयंति ॥ १३ ॥ स्मर्यते च ॥ १४ ॥ स्मर्यतेऽपि च महाभारते गत्युत्क्रांत्योरभावः ॥ सर्वभूतात्मभूतस्य सम्य-
ग्भूतानि पश्यतः ॥ देवा अपि मार्गे मुह्यंत्यपदस्य पदैषिण इति ॥ ननु गतिरपि ब्रह्मविदः सर्वगतब्रह्मात्मभूतस्य स्मर्यते ॥ शु-
कः किल वैयासकिर्मुमुक्षुरादित्यमंडलमभिप्रतस्थे पित्रा चानुगम्याहूतो भो इति प्रतिशुश्रावेति न सशरीरस्यैवायं योग-
बलेन विशिष्टदेशप्राप्तिपूर्वकः शरीरोत्सर्ग इति द्रष्टव्यं ॥ सर्वभूतदृश्यत्वाद्युपन्यासात् ॥ न ह्यशरीरं गच्छंतं सर्वे भूतानि द्रष्टुं श-
क्नुयुः ॥ तथा च तत्रैवोपसंहृतं ॥ शुकस्तु मारुताच्छीघ्रां गतिं कृत्वांतरिक्षगः ॥ दर्शयित्वा प्रभावं स्वं सर्वभूतगतोऽभवदिति ॥ ६ ॥



त्वं वाक्यस्येति सर्वं चतुरस्रं अपि चेति स्पष्टार्थं ॥ १३ ॥ सम्यगात्मभावेन भूतानि पश्यतः अपदस्य प्राप्यपदरहितस्य पदैषिणो देवा अपि मार्गे मुह्यंति मा-
र्गं न जानंति तदभावादिति स्मृतियोजना ॥ स्मृत्यंतरविरोधं शंकते ॥ ननु गतिरपीति सगुणविद्याबलेनैषा गतिरिति परिहरति सशरीरस्येति ॥ ६ ॥

ननु तर्हि तयोर्ध्वमायन्नमृतत्वमेति स एवैतान् ब्रह्म गमयतीत्यादिश्रुतीनां का गतिस्तत्राह ॥ तानीति ॥ १४ ॥ ई ॥ तानि परे तथा ह्याह पूर्वत्र गतिनिषेधेन । विद्वत्कलानां घ्राणादीनामत्रैव लय उक्तः ॥ तमुपजीव्य सर्किं तत्तत्कलाप्रकृतिषु पृथिव्यादिषु स्यादुत परमात्मनीति श्रुतिद्वयदर्शनात्संशयः कार्यः । तत्र सा । ख्यात्मप्रकृतौ विकारलय इतिन्यायानुगृहीतया गताः कला इति श्रुत्या पूर्वपक्षमग्रे वदन् तद्दोषे सिद्धान्तमाह ॥ तानीति ॥ यथा नद्यः समुद्रं प्राप्यास्तं यन्ति एवमेवा स्य परितः सर्वत्र ब्रह्मद्रष्टुरिमाः प्राणश्रद्धाद्याः पुरुषायणाः पुरुषैकस्थिताः पुरुषमेव तद्देयं प्राप्य लयं गच्छन्तीत्यर्थः ॥ मनःप्राणयोरेकीकरणेन कला

तस्मादभावः परब्रह्मविदो गत्युत्क्रान्त्योरिति श्रुतीनां तु विषयमुपरिष्टाद्व्याख्यास्यामः ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ १४ ॥ ई ॥ तानि परे तथा ह्याह ॥ १५ ॥ तानि पुनः प्राणशब्दोदितानीन्द्रियाणि भूतानि च परब्रह्मविदस्तस्मिन्नेव परस्मिन्नात्मनि प्रलीयन्ते ॥ कस्मात् तथा ह्याह श्रुतिः ॥ एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्तीति ॥ ननु गताः कलाः पञ्चदश प्रतिष्ठा इति विद्वद्विषयैवापरा श्रुतिः परस्मादात्मनोऽन्यत्रापि कलानां प्रलयमाह न सा खल्वव्यवहारापेक्षा पार्थिवाद्याः कलाः पृथिव्यादीरेव स्वप्रकृतीरपियन्तीति ॥ इतरा तु विद्वत्प्रतिपत्त्यपेक्षया कृत्स्नं कलाजातं परब्रह्मविदो ब्रह्मैव संपद्यत इति ॥ तस्माददोषः ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ १५ ॥ अविभागो वचनात् ॥ १६ ॥ स पुनर्विदुषः कलाप्रलयः किमितरेषामिव सावशेषो भवति ॥ आहोस्विन्निरवशेष इति ॥ तत्र प्रलयसामान्याच्छक्त्यवशेषताप्रसक्तौ ब्रवीति ॥ अविभागापत्तिरेवेति ॥ कुतः वचनात् ॥ तथा हि ॥ कलाप्रलयमुक्त्वा वक्ति ॥ भिद्येते चासां नामरूपे पुरुष इत्येवं प्रोच्यते स एषोऽकलोऽमृतो भवतीति ॥ अविद्यानिमित्तानां च कलानां न विद्यानिमित्ते प्रलये सावशेषत्वोपपत्तिस्तस्मादविभाग एवेति ॥ ॥ १६ ॥ ९९ ॥ तां पंचदशत्वे ॥ प्रतिष्ठा

इति द्वितीयावृत्तवचनं स्वस्वप्रकृतीः पृथिव्याद्या इत्यर्थः ॥ वस्तुगत्या विद्वद्दृष्ट्या परमात्मनि कलालयेऽपि लोकदृष्ट्या प्रतिष्ठासु लय इति न विरुद्धं न यावत्कलाः स्वप्रकृतिषु विलाप्यन्ताभिः सह पुरुषे लीयन्त इति श्रुतिद्वयतात्पर्यं ॥ १५ ॥ अविभागो वचनात् ॥ उक्तलयमुपजीव्य लयस्य द्वैधादर्शनात्संशयमाह ॥ स पुनरिति मुक्तस्य सिद्धिस्तन्निसिद्धिश्चेत्युभयत्र फलं अवशेषो मूलकारणे शक्त्यात्मना स्थितिः पुनर्जन्मयोग्यतेति यावत् ॥ विमतः कलालयः सावशेषः कलालयत्वात्सुषुप्तिवदिति पूर्वपक्षः ॥ विमतो निरवशेषः विद्याकृतत्वात् रज्ज्वां विद्यया सर्पलयवदिति युक्त्युपेतश्रुत्या सिद्धान्तयति ब्रवीतीति ॥

नामरूपे शान्तात्मके अपि भिद्येते इत्यर्थः ॥

तदोकोऽग्रज्वलनं॥ स्मृतेर्मार्गस्योपक्रमो नाडीप्रवेशनियमः स च वक्तुं सूत्रभागव्याख्याद्वाराधिकरणविषयमाह॥ तस्येति समुमूर्षुस्तेजोमात्रा इंद्रियाणि॥ तस्य हृदयस्याग्रं नाडीमुखं तस्य ज्वलनं भाविफलस्फुरणं प्रद्योतनत्वं॥ चक्षुषो वेत्यनियमश्रुतेस्तयोर्ध्वमायन्निति विशेषश्रुतेश्च संशयः॥ कि

तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥१७॥ समाप्ता प्रासंगिकी परविद्यागताऽपि चिंता संप्रति त्वपरविद्याविषयामेव चिंतामनुवर्तयति॥ समाना चासृत्युपक्रमाद्विद्वदविदुषोरु। त्क्रांतिरित्युक्तं॥ तमिदानीं सृत्युपक्रमं दर्शयति॥ तस्योपसंहृतवागादिकलापस्योच्चिक्रमिषतो विज्ञानात्मन ओकः आयतनं हृदयं स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामतीति श्रुतेः॥ तदग्रप्रज्वलनपूर्विका चक्षुरादिस्थानापादाना चोत्क्रांतिः श्रूयते॥ तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निःक्रामति चक्षुष्टो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्य इति॥ सा किमनियमेनैव विद्वदविदुषोर्भवति॥ अथास्ति कश्चिद्विदुषो विशेषनियम इति विचिकित्सायां। श्रुत्यविशेषादनियमप्राप्तावाचष्टे॥ समानेऽपि विद्वदविदुषोर्हृदयाग्रप्रद्योतने तत्प्रकाशितद्वारत्वे च मूर्धस्थाना। देव विद्वान्निष्क्रामति स्थानांतरेभ्यस्त्वितरे कुतः विद्यासामर्थ्यात्॥ यदि विद्वानपीतरवद्यतः कुतश्चिद्देहदेशादु। त्क्रामेत्नैवोत्कृष्टं लोकं लभेत॥ तत्रानर्थिकैव विद्या स्यात्॥ तच्छेषगत्यनुस्मृतियोगाच्च॥ विद्याशेषभूता च मूर्धन्यनाडीसंबद्धा गतिरनुशीलयितव्या विद्याविशेषेषु विहिता तामभ्यस्यंस्तयैव प्रतिष्ठत इति युक्तं॥ तस्मात्हृदयालयेनैव ब्रह्मणा सूपासितेनानुगृहीतस्तद्भावं समापन्नो विद्वान् मूर्धन्ययैव शताधिकया शतादतिरिक्तयैकशततम्या नाड्या निष्क्राम



सुपासकोऽप्यनुपासकवत् येनकेनचिद्द्वारेण निर्गच्छति उत मूर्धन्यनाड्यैवेति॥ अत्र पूर्वपक्षे विद्याकृतातिशयासिद्धिः॥ सिद्धांते तत्सिद्धिरिति॥ विवेकः वचनादविभागवदनियम इति प्राप्ते सिद्धांतयति॥ आचष्ट इति येनकेनचिन्मार्गेण निर्गतस्यापि ब्रह्मलोकप्राप्तौ विद्याशेषत्वेन मार्गानुस्मृतिविधेः केवलादृष्टार्थत्वं स्यादतोऽन्वहं स्मृतेनैव मार्गेण गमनं युक्तमिति भावः॥

र्दे ब्रह्म विष्वक् नानाविधा अन्या नाड्यो अन्येषामित्यर्थः सुषुम्नाख्या नाडी हृदयान्निर्गता दक्षिणाक्षिताल्वंतं गता स्तननासिकामध्यमभिनिर्द्दारा
ब्रह्मरंध्रमाप्ता सूर्यरश्मिभिरेकीकृता ब्रह्मलोकमार्ग उपासकस्येति स्थितं ॥ १७ ॥ रश्म्यनुसारी ॥ प्रकरणशोधनपूर्वकमुपासकस्य रश्म्यनुसारि॥
त्वविषयमाह अस्तीत्यादिना ॥ अथ प्रारब्धांते एतदुत्क्रमणं यथा सादयंतदा एतैरेव नाडीसंबद्धैर्रश्मिभिरुत्क्रामतीत्यर्थः ॥ अत्र संबंधस्य काल

द्भूनराभिवितते ॥ तथा हि हार्दविद्यां प्रकृत्य समामनंति ॥ शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका ॥ तयोर्ध्वमा
यन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवंतीति ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ रश्म्यनुसारी ॥ १८ ॥ अस्ति हार्दविद्या ॥ अथ य
दिदमस्मिन् ब्रह्मपुरे दहरं पुंडरीकं वेश्मेत्युपक्रम्य विहिता ॥ तत्प्रक्रियायामथ यत्रैतदाहृदयस्य नाड्य इत्युपक्रम्य सप्रपंचं ना
डीरश्मिसंबंधमुक्त्वोक्तं ॥ अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्व आक्रमत इति ॥ पुनश्चोक्तं ॥ तयोर्ध्वमाय
न्नमृतत्वमेतीति ॥ तस्मात्पूर्वोक्तनाडीरश्मिसंबंधादनुसारीति निष्क्रामतीति गम्यते ॥ तत्किमविशेषेणैवाह्नि रात्रौ
वा म्रियमाणस्य रश्म्यनुसारित्वमाहोस्विदहन्येवेति संशये सत्यविशेषश्रवणादविशेषेणैव तावद्रश्म्यनुसारीति प्रतिज्ञा
यते ॥ १८ ॥ निशि नेति चेन्न संबंधस्य यावद्देहभावित्वाद्दर्शयति च ॥ १९ ॥ अस्त्यहनि नाडीरश्मिसंबंध इत्यहनि मृतस्यास्या
त् रश्म्यनुसारित्वं रात्रौ तु प्रेतस्य न स्यात् नाडीरश्मिसंबंधविच्छेदादिति चेन्न ॥ नाडीरश्मिसंबंधस्य यावद्देहभावित्वात् याव
द्देहभावी हि शिराकिरणसंपर्कः ॥ दर्शयति चैतमर्थं श्रुतिः ॥ अमुष्मादादित्यात्प्रतायंते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः
प्रतायंते तेऽमुष्मिन्नादित्ये सृप्ता इति ॥ निदाघसमये च निशास्वपि किरणानुवृत्तिरुपलभ्यते प्रतापादिकार्यदर्शनात् ॥ १ ॥

विशेषाश्रवणाद्रात्रौ रश्म्यभावाच्च संशयमाह ॥ तत्किमिति पूर्वोक्तनाडीसंबद्धरश्मीनामत्रोपजीव्यत्वात् संगतिः ॥ पूर्वपक्षे रात्रौ मृतस्य रश्मिप्राप्त्यर्थं
सूर्योदयप्रतीक्षास्ति सिद्धांते नास्तीति मत्वा सिद्धांतं प्रतिजानीते ॥ अविशेषेणेति ॥ १८ ॥ पूर्वपक्षबीजमुपन्यस्य दूषयति ॥ निशीत्यादिना ॥ शिराना
ड्यः ॥ प्रतायंते विस्तृता भवंति सृप्ताः संबद्धाः ॥ श्रुतसंबंधस्य रात्रौ सत्त्वे युक्तिमाह ॥ निदाघेति ॥ ~ ॥ ~ ॥ ~ ॥ ~ ॥

नहिं देहसंबन्धादिरात्रिवेषोऽस्योपलब्धिः स्यादित्यत आह लोकेति सविनाराच्चावप्यहर्देधानीति धारणाभिधानं लोके रश्म्यनुवृत्त्यभिप्रायमेवेत्यर्थः ॥ किंच यदि रात्रौ मृतस्य रश्मियोगं विना चोर्ध्वगतिः स्यात्तदा रश्मिश्रुतेर्दिवामृतविषयतया संकोचः स्यादूर्ध्वगत्यभावे च विद्यायामप्रवृत्तिः स्यात्तच्च प्रतीक्षयोर्ध्वगतिरिति वाच्यं रश्म्युदयात्प्रागेव देहदाहे आदित्यप्रतीक्षावैयर्थ्यापातात् प्रतीक्षाश्रुतिविरोधाच्च तस्माद्यदाकदाचि

लोकानुवृत्ते स्तु दुर्लक्ष्यत्वं मृतं तु रजनीषु ॥ शैशिरेष्विव दुर्दिनेषु अहःस्वेव तद्रात्रौ विद्यमानानीति चैतद्दर्शयति यदि च रात्रौ प्रेतो विनैव रश्म्यनुसारेणोर्ध्वमाक्रमेत रश्म्यनुसारानर्थक्यं भवेत् ॥ न ह्येतद्विशिष्याभिधीयते ॥ यो दिवा प्रैति स रश्मीनपेक्ष्योर्ध्वमाक्रमते यस्तु रात्रौ सोऽनपेक्ष्यैवेति ॥ अथ तु विद्वानपि रात्रिप्रायणापराधमात्रेण नोर्ध्वमाक्रमेत पाक्षिकफला विद्येत्यप्रवृत्तिरेव तस्यां स्यात् ॥ मृत्युकालानियमात् ॥ अथापि रात्रावुपरतो हरागममुदीक्षेत ॥ अहरागमेऽपि अस्य कदाचिद्रश्मिसंबन्धार्हं शरीरं स्यात् पावकादिसंपर्कात् ॥ स यावत् क्षिप्येन्मनस्तावदादित्यं गच्छतीति च श्रुतिरनुदीक्षां दर्शयति ॥ तस्मादविशेषेणैवेदं रात्रिंदिवं रश्म्यनुसारित्वं ॥७॥७॥७॥७॥२०॥१९॥ अतश्चायनेऽपि दक्षिणे ॥२०॥ अत एवोदीक्षानुपपत्तेरपाक्षिकफलत्वाच्च विद्याया अनियतकालत्वाच्च मृत्योर्दक्षिणायनेऽपि म्रियमाणो विद्वान्प्राप्नोत्येव विद्याफलं ॥ उत्तरायणमरणप्राशस्त्यप्रसिद्धेर्भीष्मस्य च प्रतीक्षादर्शनात् ॥ आपूर्यमाणपक्षाद्यान् षडुदङेति मासांस्तानिति च श्रुतेरपेक्षितव्यमुत्तरायणमितीमामाशंकामनेन सूत्रेणापनुदति ॥ प्राशस्त्यप्रसिद्धिरविद्वद्विषया ॥ भीष्म((स्य प्रतिपालनमाचारप्रतिपालनार्थम् ॥



न्मृतस्य रश्मिप्राप्त्या झटिति ब्रह्मलोकप्राप्तिरिति सिद्धं ॥१९॥ एवं दक्षिणायने मृतो विद्वान् विद्याफलमाप्नोति न वेति विद्याया नित्यवत्फलश्रुतेरुत्तरायणप्राशस्त्यशास्त्राच्च संदेहे पूर्वोक्तहेतून्निदिशति ॥ अतश्चायनेऽपि दक्षिणे ॥ पूर्वपक्षमाशंक्यापनुदति ॥ उत्तरायणेत्यादिना ॥ अज्ञानामुत्तरायणे दैवान्मरणं चेत्प्रशस्तमित्यभिज्ञाभिवदनरूपाचारपरिपालनार्थं भीष्मस्य प्रतीक्षा यास्त्वषण्मासानिति श्रुतिस्तूत्तरायणदेवतापरेति वक्ष्यते ॥

तथा च देवतायाः सद्भावत्वान् विद्यया दक्षिणायनकालेपि तस्याविरुद्धेरिति भावः ॥२०॥ स्मृतिबलात्कालप्राधान्यं शंकते ॥ ननु चेति ॥ श्रौतदहराद्युपासकस्यास्माभिः कालानपेक्षोक्तस्मार्त्तयोगिनां तु कालापेक्षा स्मृतावुच्यत इत्यविरोधमाह योगिन इति योगी दहराद्युपासक एव स्मृत्युक्तः किं न स्यादित्यत आह स्मार्त्ते चेति भगवदाराधनबुद्ध्यानुष्ठितं कर्म योगः ॥ अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ॥ स संन्यासी च योगी चेति स्मृतेः ॥ धारणापूर्वकोऽकर्तृत्वानुभवः सांख्यं इंद्रियाणींद्रियार्थेषु वर्त्तत इति धारयन्निति स्मृतेः ॥ ननु श्रुतिस्मृत्योर्भि

पितृप्रसादलब्धस्वछंदमृत्युतास्थापनार्थं च ॥ श्रुतेस्त्वर्थं वक्ष्यति आतिवाहिकास्तल्लिंगादिति ॥२०॥ ननु च यत्र कालेत्वनावृत्तिमावृत्तिं चैव योगिनः ॥ प्रयाता यांति तं कालं वक्ष्यामि भरतर्षभेति कालप्राधान्येनोपक्रम्याहरादिकालविशेषः स्मृतावपुनरावृत्तये नियमितः कथं रात्रौ दक्षिणायने वा प्रयातो नावृत्तिं यायादिति ॥ अत्रोच्यते ॥ योगिनः प्रति च स्मर्यते स्मार्त्ते चैते ॥२१॥ योगिनः प्रति चायमहरादिकालविनियोगोऽनावृत्तये स्मर्यते ॥ स्मार्त्ते चैते योगसांख्ये न श्रौते ॥ अतो विषयभेदात् प्रमाणविशेषाच्च नास्य स्मार्त्तस्य कालविनियोगस्य श्रौतेषु विज्ञानेष्ववतारः ॥ नन्वग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणं ॥ धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनमिति च ॥ श्रौतावेतौ देवयानपितृयाणौ प्रत्यभिज्ञायेते स्मृतावपीति उच्यते ॥ तं कालं वक्ष्यामीति स्मृतौ कालप्रतिज्ञानाद्विरोधमाशंक्य परिहार उक्तः ॥ यदा पुनः स्मृतावप्यग्न्याद्या देवता एवातिवाहिका गृह्यंते तदा न कश्चिद्विरोध इति ॥२१॥ २१ ॥ इति श्रीशंकरभगवत्पादकृतौ ॥ चतुर्थाध्यायस्य द्वितीयः पादः समाप्तः ॥

न्नार्थत्वमयुक्तं प्रत्यभिज्ञाविरोधादिति शंकते नन्वग्निरिति कालाग्रहिणं प्रति भिन्नार्थत्वमु क्तं ॥ यदि तु श्रौतार्थप्रत्यभिज्ञया कालशब्दो देवतापरस्तर्ह्यैकार्थ्यमेवेति समाधत्ते यस्मात् विद्यासामर्थ्यात्सर्वं दैवदिष्टं गतस्य उपासकस्य फलप्राप्तिरिति सिद्धं ॥२१॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीगोविंदानंदकृतौ श्रीमच्छारीरकमीमांसाव्याख्यायां भाष्यरत्नप्रभायां चतुर्थाध्यायस्य द्वितीयः पादः समाप्तः ॥ भाष्य ॥ २१० ॥ टीका ॥ १३५ ॥ सर्वं ॥ ३४५ ॥

॥इति शारीरकसूत्रभाष्ये रत्नप्रभायां चतुर्थाध्यायस्य द्वितीयपादः समाप्तः॥

॥ अथ शारीरकसूत्रभाष्ये रत्नप्रभायां चतुर्थोध्यायस्य तृतीयपादः प्रारम्भः ॥

श्रीगणेशाय नमः॥ एवं उत्क्रान्तिं निरूप्य तत्साध्यं मार्गं गन्तव्यं च निरूपयितुं पादमारभते॥ अर्चिरादिना तत्प्रथितेः॥ वृत्तानुवादपूर्वकमाद्याधिकरणस्य विषयं मार्गमाह॥ आसृतीति विरजा विरजसः निष्पापा इत्यर्थः। श्रुतिविप्रतिपत्त्या संशयः॥ पूर्वं यदा कदाचिन्मृतस्यापि फलप्राप्तिरुक्ता न तु येन केनचिन्मार्गेण गतिरिति पूर्वपक्षफलं विकल्पः। सिद्धान्ते मार्गैक्यमिति विवेकः। उपासनाभेदात्तद्भेद एव तेन ध्येयानां मार्गाणां भेदः॥

॥ अर्चिरादिना तत्प्रथितेः॥ १॥ आसृत्युपक्रमात्समानोत्क्रान्तिरित्युक्तं। सृतिस्तु श्रुत्यन्तरेष्वनेकविधा श्रूयते। नाडीरश्मिसंबंधेनैका। अथैतैरेव रश्मिभिरूर्ध्व आक्रमत इति। अर्चिरादिकैका। तेऽर्चिषमभिसंभवन्त्यर्चिषोऽहरिति। स एतं देवयानं पंथानमापद्याग्निलोकमागच्छतीत्यन्या। यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छतीत्यपरा। सूर्यद्वारेण ते विरजाः प्रयान्तीति चापरा। तत्र संशयः। किं परस्परभिन्ना एताः सृतयः किं वैकैवानेकविशेषणेति। तत्र प्राप्तं तावद्भिन्ना एवैताः सृतय इति भिन्नप्रकरणस्थत्वात्। भिन्नोपासनाशेषत्वाच्च। अपि च अथैतैरेव रश्मिभिरित्यवधारणमर्चिराद्यपेक्षायामुपरुध्येत। त्वरावचनं च पीड्येत स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छतीति। तस्मादन्योन्यभिन्ना एवैते पंथान इति। एवं प्राप्तेऽभिदध्महेऽर्चिरादिनेति। सर्वो ब्रह्म प्रेप्सुरर्चिरादिनैवाध्वना रंहतीति प्रतिजानीमहे। कुतः। तत्प्रथितेः। प्रथितो ह्येष मार्गः सर्वेषां विदुषां। तथा हि पंचाग्निविद्याप्रकरणे ये चामी अरण्ये श्रद्धां सत्यमुपासत इति विद्यान्तरशीलिनामपि अर्चिरादिका सृतिः श्राव्यते। स्यादेतत्। यासु विद्यासु न काचिद्गतिरुच्यते तास्वियमर्चिरादिकोपतिष्ठतां। यासु त्वन्या श्राव्यते तासु किमित्यर्चिराद्याश्रयणमिति। अत्रोच्यते। भवेदेतदेवं यद्यत्यन्तभिन्ना एवैताः सृतयः स्युः। एकैव त्वेषा सृतिरनेकविशेषणा ब्रह्मलोकप्रतिपदिनी क्वचित्केनचिद्विशेषणेनोपलक्षितेति वदामः। सर्वत्रैकदेशप्रत्यभिज्ञानादितरेतरविशेषणविशेष्यभावोपपत्तेः॥

ऽऽ एवकाराच्च किंच मार्गभेदे सत्यस्मादयं मार्गस्त्वरया प्रापक इति युक्तं न मार्गैक्ये इत्यर्थः। उपासनाभेदेऽप्युपास्यब्रह्मैक्यवन्मार्गैक्यं अविरुद्धमिति सिद्धान्तयत्येवमिति। तस्य मार्गस्य प्रसिद्धत्वादिति हेत्वर्थः। ये चेत्यविशेषश्रुतिरश्रुतगतिविद्याविषयेति मार्गभेदं शंकते। स्यादेतदिति। एकस्यैव मार्गस्यानेकान्यग्न्यादीनि विशेषणानीत्युक्ते लाघवान्मार्ग॥

प्रत्यभिज्ञानाच्चेति समाध्यर्थः गंतव्यैकं विद्बणो नितयाहीति परावतो दीर्घायुषो हिरण्यगर्भस्य परा दीर्घाः समाः संवत्सरान्वसंति कार्यब्रह्मणो या जितिः सर्व
त्रजयः व्यष्टिर्व्याप्तिः तां लभत इत्यर्थः एवं गंतव्यैकत्वप्रत्यभिज्ञायां मार्गैकत्वनिश्चयात्प्रकरणभेदोऽप्रयोजक इत्युक्तं संपत्त्येवकारस्त्वरावचनयोर्गनिमा
ह॥ पत्ति त्यादिना रात्रौ स्पष्टरश्म्यभावाद्विदुषो रश्म्ययोगप्राप्तौ तन्निरासार्थ एवकारो नान्यव्यावृत्त्यर्थः यथा लौकिकमार्गे विलंबस्तथा अर्चिरादेर्नेति त्व

प्रकरणभेदेपिहि विद्यैकत्वे भवति इतरेतरविशेषणोपसंहारवद्गतिविशेषणानामप्युपसंहारः॥ विद्याभेदेपि तु गत्येकदेशप्रत्य
भिज्ञानाद्गंतव्याभेदाच्च गत्यभेद एव॥ तथा हि ते तेषु ब्रह्मलोकेषु पराः परावतो वसंति॥ तस्मिन्वसंति शाश्वतीः समाः॥ या ब्रह्मणो जितिर्या
व्युष्टिस्तां जितिं जयति तां व्युष्टिं व्यश्नुते॥ तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविंदंती तिच तत्रतत्रतदेवैकं फलं ब्रह्मलोकप्राप्तिलक्षणं प्र
दर्श्यते॥ यत्त्वेतेनैवेत्यवधारणमर्चिराद्याश्रयणेन स्यादिति नैष दोषः॥ रश्मिप्राप्तिपरत्वादस्य॥ नह्येक एवशब्दो रश्मींश्च प्रापयितुमर्हत्यर्चि
रादींश्च व्यावर्तयितुं॥ तस्माद्रश्मिसंबंध एवायमवधार्यत इति द्रष्टव्यं॥ त्वरावचनं त्वर्चिराद्यपेक्षायामपि गंतव्यांतरापेक्षयाक्षिप्रार्थ
त्वात्नोपरुध्यते यथा निमिषमात्रेणात्रागम्यत इति॥ अपि चाथैतयोः पथोर्नैकतरेण चनेति मार्गद्वयभ्रष्टानां कष्टं तृतीयं स्थानमा
चक्षाणापितृयाणव्यतिरिक्तमेकमेव देवयानमर्चिरादिपर्वाणं पंथानं प्रथयति॥ भूयांसश्चर्चिरादिस्तुतो मार्गपर्वाण्यल्पीयांसि त्वन्य
त्र भूयसां चानुगुण्येनाल्पीयसां नयनं न्याय्यं इत्यतोप्यर्चिरादिना तत्प्रथितेरित्युक्तं॥ ———— २॥ वायुमब्दादविशेष
विशेषाभ्यां॥ ३॥ केन पुनः सन्निवेशविशेषेण गतिविशेषणानामितरेतरविशेषणविशेष्यभाव इति॥ तदेतत्सुहृद्भूत्वाचार्यो ग्रथयति॥
स एतं देवयानं पंथानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स इंद्रलोकं स प्रजापतिलोकं स ब्रह्मलोकमिति कौषीत
किनां देवयानः पंथाः पठ्यते॥ तत्रार्चिरग्निलोकशब्दौ तावदेकार्थौ ज्वलनवचनत्वादिति नात्र सन्निवेशक्रमः कश्चिदन्वेष्यः॥ ॥रावचनोपपत्ति

रित्यर्थः॥ मार्गैक्ये लिंगमाह॥ अपि चेति॥ शुभमार्गबाहुल्ये तृतीयस्थानोक्तिर्न स्यादिति भावः उत्तरमार्गैक्येप्यर्चिरादिनेति विशेषणोक्तौ हेतुरित्यत आह॥ भू
यांसीति॥ २॥ उक्तं मार्गस्यैक्यमुपजीव्य पर्वक्रममाह॥ वायुमब्दात्॥ अर्चिरादिभ्यस्तस्मादयमनंतर इति क्रमेण विशेषविशेष्यभाव उच्यत इत्यधिकरणस्तात्प

शा॰भा॰
र॰प्र॰टी॰
४०७

अत्राग्न्यनंतरं पठितो वायुर्विषयः स किं अर्चिरात्मकाग्नेरनंतरं उत संवत्सरात्परइति पाठाद्द्रक्ष्यमाणविशेषश्रुतेश्च संशये सिद्धांतमेवोपक्रमते उच्यत इति पुरुष उपासकोस्माल्लोकाद्देहाद्यैति निर्गच्छति तस्मै प्राप्ताय पुरुषाय स वायुस्तत्र स्वात्मनि विजिहीते छिद्रं करोति तेन वायुदत्तेन रथचक्रछिद्रतुल्येन द्वारेणोर्ध्वमादित्यं गच्छतीति श्रुत्यर्थः॥ इदानीं पूर्वपक्षमाह॥ कस्मात्पुनरिति॥ पाठबलादर्चिषोनंतरो वायुरित्यर्थः कौषीतकिनां पाठमात्रं न क्रमविशेषवाचीकश्चिच्छ

वायुस्त्वर्चिरादौ वर्त्मनि तच्छ्रुतः क तमस्मिन्स्थाने संनिवेशयितव्य इति॥ उच्यते तेर्चिषमभिसंभवंत्यर्चिषोहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षडुदङेति मासांस्तान्मासेभ्यः संवत्सरं संवत्सरादादित्यमित्यत्र संवत्सरात्परां चमादित्यादर्वाचं वायुमभिसंभवंति॥ कस्मात्॥ अविशेषविशेषाभ्यां॥ तथाहि स वायुलोकमित्यविशेषोपदिष्टस्य वायोः श्रुत्यंतरे विशेषोपदेशो दृश्यते॥ यदा वै पुरुषोस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्व आक्रमते स आदित्यमागच्छतीत्येतस्मादादित्याद्वायोः पूर्वत्वदर्शनाद्विशेषादब्दादित्ययोरंतराले वायुर्निवेशयितव्यः॥ कस्मात्पुनरग्नेः परत्वदर्शनाद्विशेषादर्चिषोनंतरं वायुर्न निवेश्यते॥ नैषोस्ति विशेष इति वदामः॥ ननूदाहृता श्रुतिः स एतं देवयानं पंथानमापद्याग्निलोकमागच्छति स वायुलोकमित्युच्यते॥ केवलोत्र पाठः पौर्वापर्येणावस्थितो नात्र क्रमवचनः कश्चिच्छब्दोस्ति॥ पदार्थोपदर्शनमात्रं ह्यत्र क्रियते॥ एतमेतं चागच्छतीति॥ इतरत्र पुनर्वायुप्रदत्तेन रथचक्रमात्रेण छिद्रेणोर्ध्वमाक्रम्यादित्यमागच्छतीत्यवगम्यते क्रमस्तस्मात्सूक्तं विशेषविशेषाभ्यामिति॥ वाजसनेयिनस्तु मासेभ्यो देवलोकं देवलोकादादित्यमिति समामनंति॥ तत्रादित्यानंतर्याय देवलोकाद्वायुमभिसंभवेयुः॥ वायुमब्दादिति तु छांदोग्यश्रुत्यपेक्षयोक्तं छांदोग्यवाजसनेयकयोस्त्वेकत्र देवलोको न विद्यते परत्र संवत्सरस्तत्र श्रुतिद्वयप्रत्ययादुभावप्युभयत्र ग्रथयितव्यौ॥ तत्रापि माससंबंधात्संवत्सरः पूर्वः पश्चिमो देवलोक इति विवेक्तव्यम्॥ २॥

१९ ब्दोस्ति काण्वानां तु तेनेत्यूर्ध्व इति च शब्दाभ्यां क्रमनिश्चयात्पाठबाध इति सिद्धांतार्थः अस्त्वर्चिरादिमार्गे छांदोग्यस्थे संवत्सरपाठाद्वायोरब्दात्परत्वं वाजिश्रुतिस्थे तु संवत्सरस्याश्रुतेः कथमब्दात्परो वायुरित्यत आह वाजेनिनर्हि देवलोकाद्वायुमिति सूत्रं स्यादित्यत आह॥ वायुमब्दादिति त्विति॥ संवत्सरस्य मासावयवित्वान्मासानंतर्यं संवत्सरात्परो देवलोकस्ततः परो वा

अ॰पा॰
३

पुर्वयोः पर आदित्य इति श्रुतिद्वये क्रमो निष्पन्नस्तेनेति तृतीयाश्रुत्या वायोरादित्यपू८र्वत्वावगमादिति सूत्रे तु वायुपदं देवलोकपूर्वकवायुपरमिति स्थितं॥ ३॥

एवं कौषीतकिभिरग्न्यनंतरं पठितस्य वायोः स्थानमुक्त्वा वाय्वनंतरं पठितस्य वरुणस्यार्चिरादिमार्गे स्थानमाह तडितोधि वरुणः संबंधात् पठितो
वरुणादिर्मार्गपर्वत्वेन संबध्यते न वेति संदेहे हेर्चिषोहरित्यादि पंचम्यार्चिरादीनां क्रमेण मार्गपर्वतया बद्धत्वाद्वाय्वोरिव स्थानविशेषश्रुत्यभावादलब्धस्था

तडितोधि वरुणः संबंधात् ॥३॥ आदित्याच्चंद्रमसं चंद्रमसो विद्युतमित्यस्या विद्युत उपरिष्टात्स्व वरुणलोकमित्ययं वरु
णः संबध्यते ॥ अस्ति हि संबंधो विद्युद्वरुणयोः ॥ यदा हि विशाला विद्युतस्तीव्रस्तनयित्नुनिर्घोषा जीमूतोदरेषु प्रनृत्यंति अथापः
प्रपतंति ॥ विद्योतते स्तनयति वर्षिष्यति वा इति च ब्राह्मणं ॥ अपां चाधिपतिर्वरुण इति श्रुतिस्मृतिप्रसिद्धिः ॥ वरुणादधीं
द्रप्रजापती स्थानांतराभावात्पाठसामर्थ्याच्चागंतुकत्वादपि वरुणादीनामंत एव निवेशो वैशेषिकस्थानाभावाद्विद्युच्चां
त्यार्चिरादिवर्त्मनि ॥ ३ ॥ आतिवाहिकास्तल्लिंगात् ॥४॥ तेष्वेवार्चिरादिषु संशयः किमेतानि मार्गचिन्हानि ॥ उत भोगभूमयो
थवा नेतारो गंतॄणामिति ॥ तत्र मार्गलक्षणभूता अर्चिरादय इति तावत्प्राप्तं तत्स्वरूपत्वादुपदेशस्य ॥ यथा हि लो
के कश्चिद्ग्रामं नगरं वा प्रतिष्ठासमानोनुशिष्यते गच्छेतस्त्वमसुं गिरिं ततो न्यग्रोधं ततो नदीं ततो ग्रामं ततो नगरं वा प्राप्स्य
सीति ॥ एवमिहाप्यर्चिषोहरन्ह आपूर्यमाणपक्षमित्याह ॥ अथवा भोगभूमय एता इति प्राप्तं ॥ तथाहि ॥ लोकशब्देना
ग्न्यादीननुबध्नाति अग्निलोकमागच्छतीत्यादि ॥ लोकशब्दश्च प्राणिनां भोगायतनेषु भाष्यते ॥ मनुष्यलोकः पितृलो
को देवलोक इति च ॥ तथा च ब्राह्मणं अहोरात्रेषु ते लोकेषु सज्जंत इत्यादि तस्मान्नातिवाहिका अर्चिरादयो ऽचेतनत्वा
देष्यं तेषामातिवाहिकत्वानुपपत्तिः ॥ चेतना हि लोके राजनियुक्ताः पुरुषा दुर्गेषु मार्गेष्वतिवाह्याननतिवाहयंतीति ॥ ३ ॥

नमा १

तो वरुणादिर्न संबंध्यत इति प्राप्ते सिद्धांतमाह ॥ आदित्यादिति ॥ अपां विद्युत्कार्यत्वेन संबंधे मोहः विद्योतत इति ॥ वरुणस्याद्वारा विद्युत्संबंधादागंतुकाना
मंते निवेश इति न्यायाच्च विद्युदानंतर्ये सति यथापाठमिंद्रप्रजापत्योः क्रम इत्यर्थः ॥३॥ एवमर्चिरादीनां क्रमं निरूप्य स्वरूपं निरूपयति ॥ आतिवाहिकास्तल्लिंगा
त् चिन्हनिर्देशसाम्याल्लोकशब्दान्नेतृत्वलिंगाच्च संशयः ॥ आद्यपक्षद्वयं पूर्वपक्षः ॥

॥ अर्चिरादयो विद्युदन्ताश्चेतनाने तारश्चामानवपुरुषेण नेत्रा सह पठितत्वादिति सिद्धान्तयत्येवमित्यादिना यथाश्रुत्यमानवस्यास्तु नेतृत्वं नार्चि
रादीनामिति शंकते ॥ तद्वचनमिति पुरुषस्यामानवत्वं नेतृत्वं चेत्युभयपरत्वे वाक्यभेदः स्यादतोऽर्चिरादिपदैर्नेतारस्तवमानवाः प्रकृताः प्रकरण
बलाद्धि विद्युदनन्तरं मानवस्य नेतुः प्राप्तौ प्रकरणप्राप्तनेतृत्वानुवादेनामानवत्वमेकमेव प्रतिपाद्यतइति वक्तव्यमित्याह ॥ नेतिनेतृप्रकरणानंगीकारे
त्वमानवः पुरुषो गमयतीति वाक्यं भिद्येत अमानवत्ववन्नेतृत्वस्याप्यप्राप्तेरिति भावः ॥ ४ ॥ नेतृत्वानुवादलिंगस्यानुग्राहकन्यायपरं सूत्रं गृह्णाति ॥ नन्वि

एवं प्राप्ते ब्रूमः ॥ आतिवाहिकास्त एवैते भवितुमर्हन्ति ॥ कुतस्तल्लिंगात्तथाहि चंद्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान्ब्र
ह्म गमयतीति सिद्धवद्गमयितृत्वं दर्शयति ॥ तद्वचनं तद्विषयमेवोपक्षीणमिति चेन्न प्राप्तमानवत्वनिवृत्तिपरत्वाद्विशेषणस्य
॥ यद्यर्चिरादिषु पुरुषा गमयितारः प्राप्तास्ते च मानवास्ततो युक्तं तन्निवृत्त्यर्थं पुरुषविशेषणममानव इति ॥ ४ ॥ ननु लिंग
मात्रमगमकं न्यायाभावात् नैष दोषः ॥ उभयव्यामोहात्तत्सिद्धेः ॥ ५ ॥ येनावदर्चिरादिमार्गगास्ते देहवियोगात्संपिंडितक
रणग्रामा इत्यस्वतंत्राः ॥ अर्चिरादीनामप्यचेतनत्वादस्वातंत्र्यमित्यतोऽर्चिराद्यभिमानिनश्चेतना देवताविशेषा अतिया
त्रायां नियुक्ता इति गम्यते ॥ लोकेऽपि हि मत्तमूर्छितादयः संपिंडितकरणाः परप्रयुक्तवर्त्मानो भवन्ति ॥ अनवस्थितत्वा
दप्यर्चिरादीनां न मार्गलक्षणत्वोपपत्तिः ॥ न हि रात्रौ प्रेतस्याहःस्वरूपाभिसंभव उपपद्यते ॥ न च प्रतिपालनमस्तीत्युक्तं
पुरस्तात् ॥ ध्रुवत्वात्तु देवतात्मनां नायं दोषो भवति ॥ अर्चिरादिशब्दता चैषामर्चिराद्यभिमानादुपपद्यते ॥ अर्चिषोऽहरित्या
दिनिर्देशस्त्वातिवाहिकत्वेऽपि न विरुध्यते ॥ अर्चिषा हेतुनाऽहरभिसंभवति ॥ अन्हा हेतुनाऽपूर्यमाणपक्षमिति ॥ ५ ॥

नि ॥ यद्यनेतारोऽचेतनास्तर्ह्यर्चिरादयः तर्हि मार्गतत्त्वं तोरुभयोरपि व्यामोहादज्ञत्वादूर्ध्वगतिर्न स्यादतः स्वयं प्रयत्नशून्यश्चेतनान्तरेण नेय इति लौ
किकन्यायानुग्रहात्तत्सिद्धेर्नेतृत्वसिद्धेरुक्तलिंगं न्यायोपेतमिति सूत्रार्थः पूर्वपक्षहेतुं दूषयति ॥ अनवस्थितत्वादित्यादिना ॥ अर्चिरहरादीनामस्थिरत्वा
द्रात्र्यादौ मृतस्य प्रतीक्षा नास्तीत्युक्तत्वाच्च न मार्गचिह्नत्वं भोग्यत्ववादेव तावेत्वस्थिरत्वदोषो नास्तीत्यर्थः यत्तु पदेश स्वारस्याच्चिन्हत्वं भातीति तत्राहार्चि

विद्युत्त्वेनेतत्त्वसंशयाच्च वाक्यशेषान्निर्णय इत्याह अपि चेति ॥ यदुक्तं लोकशब्दाज्ज्ञेयत्वमिति तत्रेत्याह ॥ संपिंडितेनेति ॥ ५ ॥ सूत्रांतरं गृह्णाति ॥ कथं पुनरिति अमा-
नवो विद्युल्लोकमागतो वैद्युतस्तेनेत्यर्थः ॥ श्रुतौ तु वैद्युतात्तल्लोकादित्यर्थः श्रुत्या वरुणादीनां नेतृत्वाभावेप्यनुग्राहकत्वेन मार्गांतर्भाव इति भावः ॥ ६ ॥ एवं मार्गं निरू-

तथा च लोकप्रसिद्धिरप्यातिवाहिकेष्वेवंजातीयक उपदेशो दृश्यते गच्छ त्वमितो बलवर्माणं ततो जयसिंहं ततः कृष्णगुप्तमिति । अपि चोपक्र-
मेऽर्चिषमभिसंभवंतीति संबंधमात्रमुक्तं न संबंधविशेषः कश्चित् उपसंहारे तु स एतान्ब्रह्म गमयतीति संबंधविशेषोऽतिवाह्यातिवाहक-
त्वलक्षण उक्तस्तेन स एवोपक्रमेऽपीति निर्धार्यते । संपिंडितकरणत्वादेव च गंतॄणां न तत्रोपभोगसंभवः । लोकशब्दस्त्वनुपभुंजानेष्वपि गंतृषु ग-
मयितुं शक्यते । अन्येषां तल्लोकवासिनां भोगभूमित्वात् । अतोऽग्निस्वामिकं लोकं प्राप्तोऽर्चिषा नीयते वायुस्वामिकं प्राप्तो वायुनेति योजयितव्यं ॥
॥ ५ ॥ कथं पुनरातिवाहिकत्वपक्षे वरुणादिषु तत्संभवः । विद्युतो ह्यधि वरुणादय उपक्षिप्ताः विद्युतस्त्वनंतरमा ब्रह्मप्राप्तेरमानवस्यैव पुरुष-
स्य गमयितृत्वं श्रुतमिति । अत उत्तरं पठति । वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ६ ॥ ततो विद्युदभिसंभवनादूर्ध्वं विद्युदनंतरवर्तिनैवामानवेन पुरुषे-
ण वरुणलोकादिष्वतिवाह्यमाना ब्रह्मलोकं गच्छंतीत्यवगंतव्यं । तान्वैद्युतात्पुरुषोऽमानवः स एत्य ब्रह्मलोकं गमयतीति तस्यैव गम-
यितृत्वश्रुतेः । वरुणादयस्तु तस्यैवाप्रतिबंधकरणेन साहाय्यानुष्ठानेन वा केनचिदनुग्राहका इत्यवगंतव्यं । तस्मात्साधूक्तमातिवा-
हिका देवतात्मानोऽर्चिरादय इति ॥ ४ ॥ ६ ॥ कार्यं बादरिरस्य गत्युपपत्तेः ॥ ७ ॥ स एनान्ब्रह्म गमयतीत्यत्र विचिकित्स्यते किं कार्य-
मपरं ब्रह्म गमयत्याहोस्वित्परमेवाविकृतं मुख्यं ब्रह्मेति । कुतः संशयः ब्रह्मशब्दप्रयोगाद्गतिश्रुतेश्च । तत्र कार्यमेव सगुणमप-
रं ब्रह्मैनान्गमयत्यमानवः पुरुष इति बादरिराचार्यो मन्यते । कुतः अस्य गत्युपपत्तेः । अस्य हि कार्यस्य ब्रह्मणो गंतव्यत्वमुपपद्यते प्रदे-
शवत्त्वात् न तु परस्मिन्ब्रह्मणि गंतृत्वं गंतव्यत्वं गतिर्वावकल्पते सर्वगतत्वात्प्रत्यगात्मत्वाच्च गंतॄणां ॥ ७ ॥

प्य गंतव्यं चिंतयति ॥ कार्यं बाद-
रिरस्य गत्युपपत्तेः परं ब्रह्म गंतव्यमिति पूर्वपक्षे मार्गस्योक्तार्थता ॥ कार्यब्रह्मेति सिद्धांते भोगार्थतेति मत्वा प्रथमं सिद्धांतमाह ॥ तत्र कार्यमेवेति सर्वगतस्या-
पि प्रदेशांतरविशिष्टत्वेनाकाशस्य गंतव्यत्वं दृष्टं ब्रह्मणस्तु प्रत्यक्त्वान्न कथमपि गंतव्यतेत्यर्थः ॥ ७ ॥

शा·भा·
र·प्र·टी·
४०९

ब्रह्मलोकेष्वितिबहुवचनंलोकशब्दाधारसप्तमीश्रुतिभिर्गंतव्यस्यपरस्मादाद्वृत्तत्वाच्चनपरंगंतव्यमित्याह विशेषितत्वाच्चेतिपरब्रह्मणिभोग्यत्वोपचारात्गौणी।
लोकश्रुतिरित्यर्थः॥८॥ नपुंसकब्रह्मशब्देनकारणवाचिनाकार्यंलक्ष्यतेगंतव्यत्वन्यायोपेतबहुवचनाद्यनेकश्रुत्यनुग्रहाय॥९॥ नत्वानावृत्तिलिंगात्परस्यगंत

अ·पा·
४ ३

विशेषितत्वाच्च॥८॥ ब्रह्मलोकान्गमयतितेतेषुब्रह्मलोकेषुपराःपरावतोवसंतीतिचश्रुत्यंतरेविशेषितत्वात्कार्यब्रह्मविषयैवगतिरिति
गम्यते॥ नहिबहुवचनेनविशेषणंपरस्मिन्ब्रह्मण्यवकल्पते॥ कार्येत्ववस्थाभेदोपपत्तेःसंभवतिबहुवचनं॥ लोकश्रुतिरपिविकारगोचराया
मेवसन्निवेशविशिष्टायांभोगभूमावांजसीगौणीत्वन्यत्र ब्रह्मैवलोकःएषसंम्राडित्यादिष्वधिकरणाधिकर्तव्यनिर्देशोपिपरस्मिन्ब्रह्म।
णिनांजसःस्यात्तस्मात्कार्यविषयमेवेदंनयनं॥९॥ ननुकार्यविषयेपिब्रह्मशब्दोनोपपद्यते॥ समन्वयेसमस्तस्यहिजगतोजन्मादिकारणंब्र
ह्मेतिस्थापितमित्यत्रोच्यते॥ सामीप्यात्तुतद्व्यपदेशः॥९॥ तुशब्दआशंकाव्यावृत्त्यर्थः॥ परब्रह्मसामीप्यादपरस्यब्रह्मणस्तस्मिन्नपिब्रह्मश
ब्दप्रयोगोनविरुध्यते॥ परमेवहिब्रह्मविशुद्धोपाधिसंबंधात्क्वचित्कैश्चिद्विकारधर्मैर्मनोमयत्वादिभिरुपासनायोपदिश्यमानमपरमिति
स्थितिः॥९॥ ननुकार्यप्राप्तावनावृत्तिश्रवणंनघटते॥ नहिपरस्मात्ब्रह्मणोन्यत्रक्वचिन्नित्यतांसंभावयंति॥ दर्शयतिचदेवयानेनप
थाप्रस्थितानामनावृत्तिमेतेनप्रतिपद्यमानाइमंमानवमावर्तंनावर्तंत इतितेषामिहनपुनरावृत्तिरस्तीति॥ तयोर्ध्वमायन्नमृतत्वमेतीति।
चेदत्रब्रूमः॥ कार्यात्ययेतदध्यक्षेणसहातःपरमभिधानात्॥१०॥ कार्यब्रह्मलोकप्रलयप्रत्युपस्थानेसतितत्रैवोत्पन्नसम्यक्दर्शनाः
संतस्तदध्यक्षेणहिरण्यगर्भेणसहातःपरंपरिशुद्धंविष्णोःपरमंपदंप्रतिपद्यंतइति॥ इत्थंक्रममुक्तिरनावृत्त्यादिश्रुत्यभिधानेभ्यो।
भ्युपगंतव्या नह्यंजसैवगतिपूर्विकापरप्राप्तिःसंभवतीत्युपपादितं॥१०॥ स्मृतेश्च॥११॥ स्मृतिरप्येतमर्थमनुजानाति॥ ब्रह्मणास
हतेसर्वेसंप्राप्तेप्रतिसंचरे॥ परस्यांतेकृतात्मानःप्रविशंतिपरंपदमिति॥ तस्मात्कार्यब्रह्मविषयागतिःश्रूयतइतिसिद्धांतः॥११॥६

ए·म·
४०९

व्यता॥ क्रममुक्त्यालिंगस्यान्यथासिद्धेरितिभावः॥१०॥ प्रतिसंचरोमहाप्रलयः॥ तस्मिन्प्राप्तेपरस्यहिरण्यगर्भस्यांतेसमष्टिलिंगशरीररूपविकारा
वसानेब्रह्मलोकनिवासिनःकृतात्मानःशुद्धधियस्तत्रोत्पन्नसम्यक्धियः सर्वेब्रह्मणामुच्यमानेनसहपरंपदंप्रविशंतीतियोजना॥११॥ ॥ ६ ॥

एवंसिद्धांतमुक्त्वातेननिरस्तंपूर्वपक्षमाह॥ कंपुनरित्यादिना॥१२॥ दहरविद्यायांकठवल्लीषुपरब्रह्मप्रकरणेचतयोर्ध्वमायन्नित्यादिगतिः। दर्शिताएवं।
ब्रह्मश्रुत्यमृतत्वलिंगाभ्यांप्रकरणाच्चपरविषयागतिरित्युक्तं॥१३॥ संप्रतिप्रजापतेःसभांवेश्मप्राप्नुयामितिउपासकस्यमरणकालेकार्यप्राप्तिसंकल्पश्रुते
र्नपरंगंतव्यमितिशंकांनिरस्यतिनचकार्यइतिपरस्यप्रकृतत्वात्यशः पदस्यपरमात्मनामत्वप्रसिध्याशयःपदेनात्मोक्तिर्यश आत्माब्राह्मणानामहंभवा

कंपुनःपूर्वपक्षमाशंक्यायंसिद्धांतःप्रतिष्ठापितःकार्यंबादरिरित्यादिनेति॥ सइदानींसूत्रैरेवोपप्रदर्श्यते॥परंजैमिनिर्मुख्यत्वा
त्॥१२॥जैमिनिस्त्वाचार्यःसएतान्ब्रह्मगमयतीत्यत्रपरमेवब्रह्मप्रापयतीतिमन्यते॥कुतःमुख्यत्वात्॥ परंहिब्रह्मब्रह्मशब्दस्यमु
ख्यमालंबनंगौणमपरं॥ मुख्यगौणयोश्चमुख्येसंप्रत्ययोभवति॥१२॥ दर्शनाच्च॥१३॥ तयोर्ध्वमायन्नमृतत्वमेतीतिचगति
पूर्वकममृतत्वंदर्शयति॥ अमृतत्वंचपरस्मिन्ब्रह्मण्युपपद्यते॥ नकार्येविनाशित्वात्कार्यस्य॥ अथयत्रान्यत्पश्यतितदल्पं
तन्मर्त्यमितिप्रवचनात्परविषयैवचैषागतिःकठवल्लीषुपठ्यते॥नहितत्रविद्यांतरप्रक्रमोस्ति॥अन्यत्रधर्मादन्यत्राधर्मादि
तिपरस्यैवब्रह्मणःप्रक्रांतत्वात्॥१३॥नचकार्येप्रतिपत्त्यभिसंधिः॥१४॥अपिचप्रजापतेःसभांवेश्मप्रपद्यइतिनायंकार्यवि
षयःप्रतिपत्त्यभिसंधिः॥ नामरूपयोर्निर्वहितातेयदंतरातद्ब्रह्मेतिकार्यविलक्षणस्यपरस्यैवब्रह्मणःप्रकृतत्वाद्यशोहं
भवामिब्राह्मणानामितिचसर्वात्मत्वेनोपक्रमात्नतस्यप्रतिमाअस्तियस्यनाममहद्यशइतिचपरस्यैवब्रह्मणोयशोनाम
त्वप्रसिद्धेः॥ साचेयंवेश्मप्रतिपत्तिःगतिपूर्विकाहार्दविद्यायामुदिता॥ तदपराजितापूर्ब्रह्मणःप्रभुविमितंहिरण्मयमित्यत्र॥

मितयाराज्ञांयशोविशांयशइतिसार्वात्म्यलिंगाच्चपरप्राप्तिसंकल्पस्यवायमित्यर्थः॥ अस्तुवेश्मप्रतिपत्तौछापरब्रह्मविषयातथापिसाकथंगति
पूर्विकास्यादित्यतआहसाचेतितत्रब्रह्मलोकेविद्याहीनैरपराजितापूरस्तिब्रह्मणोहिरण्यगर्भस्यतेनैवप्रभुणाविमितंनिर्मितंहिरण्मयंवेश्मास्ति
तत्प्रतिपद्यतेविद्वानितिदहरविद्यायांगतिपूर्वकावेश्मप्राप्तिरुक्तातेनपरब्रह्मण्यपिवेश्मप्रतिपत्तिशब्दसामान्यादगतिपूर्वकत्वंतस्याःसिध्यतीत्यर्थः॥

॥किंचपदगतावितिधातुपाठात्वेश्मप्रपद्येइत्यत्रमार्गापेक्षाभातीत्याह॥पदेरपीति॥पूर्वपक्षमुपसंहरतितस्मादिति॥आद्यएवसिद्धांतपक्षइतिदृढी-
कर्तुमुपक्रमतेताविति॥ब्रह्मशब्दमुख्यत्वादिहेतूनामाभासत्वंस्फुटयति॥नहीति॥गंतव्यत्वस्यब्रह्मलोकेष्वितिबहुवचनादेःसंकल्पादेवगंधादिदिव्य-
भोगश्रुतेश्चपरब्रह्मण्यसंभवान्मुख्यार्थत्यागइत्यर्थः॥यद्यप्येतद्वैसत्यकामपरंचापरंचब्रह्मेत्यादिश्रुतिषुप्रयोगसाम्याद्ब्रह्मशब्दउभयत्ररूढस्त-
थामुख्यएवतथापिपूर्णेपरस्मिन्नवयवार्थस्यनिरतिशयबृहत्त्वस्यलाभादपरब्रह्मण्यमुख्यत्वमंगीकृतमितिमंतव्यं॥यदुक्तंकठवल्लीषुप्रकरणब-

पदेरपिचगत्यर्थत्वान्मार्गापेक्षावसीयते॥तस्मात्परब्रह्मविषयागतिश्रुतयइतिपक्षांतरं॥तावेतौद्वौपक्षावाचार्येणसूत्रितौगत्यु-
पपत्त्यादिभिरेकोमुख्यत्वादिभिरपरः॥तत्रगत्युपपत्त्यादयःप्रभवंतिमुख्यत्वादीनामाभासयितुं॥नतुमुख्यत्वादयोगत्युपपत्त्यादीनि।
त्याद्यएवसिद्धांतोव्याख्यातोद्वितीयःपूर्वपक्षः॥नह्यसत्यपिसंभवेमुख्यस्यैवार्थस्यग्रहणमितिकश्चिदाज्ञापयिताविद्यते॥
परविद्याप्रकरणेपिचतत्स्तुत्यर्थंविद्यांतराश्रयगत्यनुकीर्तनमुपपद्यते॥विष्वगन्याउत्क्रमणेभवंतीतिवत्॥प्रजापतेःस-
भावेश्मप्रपद्यइतितुपूर्ववाक्यविच्छेदेनकार्येपिप्रतिपत्त्यभिसंधिर्नविरुध्यते॥सगुणेपिचब्रह्मणिसर्वात्मत्वसंकीर्तनंसर्वकर्मा
सर्वकामइत्यादिवदवकल्प्यते॥तस्मादपरविषयाएवगतिश्रुतयइति॥केचित्पुनःपूर्वाणिपूर्वपक्षसूत्राणिभवंत्युत्तराणिसिद्धांत
सूत्राणीत्येतांव्यवस्थामनुरुध्यमानाःपरविषयाएवगतिश्रुतीःप्रतिष्ठापयंति॥तदनुपपन्नंगंतव्यत्वानुपपत्तेर्ब्रह्मणः॥यत्स-
र्वगतंसर्वांतरंसर्वात्मकंचपरंब्रह्मआकाशवत्सर्वगतश्चनित्योयत्साक्षादपरोक्षाद्ब्रह्मयआत्मासर्वांतरआत्मैवेदंसर्वंब्रह्मैवे-
दंविश्वमिदंवरिष्ठंइत्यादिश्रुतिनिर्धारितविशेषंतस्यगंतव्यतानकदाचिदप्युपपद्यते॥

ऽऽलाद्गतिःपरविषयेतितत्राहपदेरिति॥यथाविद्यासं-
बद्धस्तुत्यर्थंतदसंबद्धनाड्यंतरकीर्तनंतथापरविद्यास्तुत्यर्थंतत्प्रकरणेप्यपरविद्याश्रयगतिसंकीर्तनंयुज्यतेगतिंविनापिहिपरविद्यानिरतिश-
यफलत्वात्तस्यांत्वपरविद्याफलंगतिसाध्यमंतर्भवतीतिस्तुतिलाभादित्यर्थः॥यदप्युक्तंप्राप्तिसंकल्पोपिप्रकृतपरविषयइतितत्रेत्याह॥प्रजापतेरितिप्रजापतिस-
भावेश्मश्रुतिनिमित्तसंघातात्मकवाक्येनचप्रकरणंबाध्यंयशोहमितिसार्वात्म्यंतूपासनार्थमपरब्रह्मण्युपपद्यतइत्यर्थः॥स्वपक्षमुक्त्वापरमतंदूषयतिकेचि-

॥ सर्वगतस्यस्वात्मभूतस्यापि ब्रह्मणः संसारदेशाद्देशांतरेण तत्कालात्कालांतरेण विशिष्टतया गंतव्यत्वं स्यादिति पृथिवीवयोर्दृष्टांताभ्यां शंकते॥ नन्विति यत्त्वंविनैव प्राप्तं अनन्यत्वं अवस्थांतद्वतोरभेदात्स्वात्मभूतत्वं॥ ननु युक्तं भूवयसोः प्राप्तयोरपि देशांतरकालांतरविशिष्टत्वेन गंतव्यत्वं तयो र्गंतृभिन्नत्वा द्ब्रह्मणस्तु गंतृभिन्नस्य कथं गंतव्यत्वं तत्राह सर्वशक्तीति या प्राप्ता भूः सा न गंतव्या यत्तु गंतव्यं देशांतरं तत्त्व प्राप्तमिति कुतः प्राप्तस्य गंतव्यता वयसो पि कालांतरे भिव्य क्ति मात्रं न गंतव्यत्वमिति वस्तुगतिः॥ अंगीकृत्य विशिष्टभूवयसो र्गंतव्यतां परब्रह्मणो देशकालवैशिष्ट्याभा

नहि गतमेव गम्यते॥ अन्योह्यन्यद्गच्छतीति प्रसिद्धं लोके॥ ननु लोके गतस्यापि गंतव्यता देशांतरविशिष्टाद्दृष्टा॥ यथा पृथिवीस्थ एव पृथिवीं देशांतरद्वारेण गच्छतीति॥ तथाऽनन्यत्वे पि बालस्य कालांतरविशिष्टं वार्धक्यं स्वात्मभूतमेव गंतव्यं दृष्टं तद्वद्ब्रह्मणो पि स र्वशक्त्युपेतत्वात्कथंचिद्गंतव्यता स्यादिति॥ न प्रतिषिद्धसर्वविशेषत्वाद्ब्रह्मणः॥ निष्कलं निष्क्रियं शांतं निरवद्यं निरंजनं॥ अस्थूलमनण्वह्रस्वमदीर्घमलोहितं सबाह्याभ्यंतरो ह्यजः॥ स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म स एष नेति नेत्यात्मेत्यादिश्रुतिस्मृतिन्यायेभ्यो न देशकालादिविशेषयोगः परमात्मनि कल्पयितुं शक्यते॥ येन भूप्रदेशवयोवस्थान्यायेना स्य गंतव्यता स्यात्॥ भूवयसोस्तु प्रदेशावस्थादिविशेषयोगादुपपद्यते देशकालविशिष्टा गंतव्यता॥ जगदुत्पत्तिस्थितिप्रलयहेतुत्व श्रुतेरनेकशक्तित्वं ब्रह्मण इति चेन्न विशेषनिराकरणश्रुतीनामनन्यार्थत्वादुत्पत्त्यादिश्रुतीनामपि समानमनन्यार्थत्वमिति चेन्न तासामेकत्वप्रतिपादनपरत्वान्मृदादिदृष्टांतैर्हि सतो ब्रह्मण एकस्य सत्यत्वं विकारस्य चानृतत्वं प्रतिपादयच्छास्त्रं नोत्पत्त्यादिपरं भ वितुमर्हति॥ कस्मात्पुनः कृत्पत्त्यादिश्रुतीनां विशेषनिराकरणश्रुतिशेषत्वं न पुनः रतीतरशेषत्वमितरासामिति॥ वान्नकथंचिदपि गंत

व्यतेत्याह नेत्यादिना॥ अनादिमत्परं ब्रह्मेत्याद्यास्मृतिः इत्थविशेषस्य दृशिकल्पितत्वाद्दृगात्मनो निर्विशेषतेति न्यायः॥ सगुणमेव ब्रह्म सूत्रात्माप स्यापरं गंतव्यं निर्विशेषं तु नास्त्येवेति शंकते जगदुत्पत्तीति किं निर्विशेषस्यासत्त्वं मानाभावात्सविशेषश्रुतिविरोधाद्वा नाद्य इत्याह॥ नेति द्वितीयं शंक ते उत्पत्त्यादीति सविशेषश्रुतीनां निर्विशेषश्रुतिशेषत्वाच्च विरोध इत्याह नेति निर्विशेषश्रुतीनामेव सविशेषश्रुतिशेषत्वं किं न स्यादित्याह कस्मादिति॥

नासांस्वार्थे फलवत्त्वेन निराकांक्षत्वाच्छेषिता विशेषश्रुतीनां त्वफलत्वान्निषेध्यविशेषसमर्पणादिद्वारेण शेषत्वं फलवत्सन्निधावफलं तदङ्ग
मितिन्यायादित्याह उच्यत इत्यादिना॥ न केवलं न्यायाच्छेषता किंतु श्रुत्यापीत्याह॥ प्रत्यस्तं त्विति तत्र मूलकारणे ब्रह्मण्येनं तत्शुंगं जगदात्मकं
कार्यमुत्पन्नमित्युपक्रम्य तेन शुंगेन सन्मूलमन्विच्छेत्युपसंहारे सत एव ज्ञेयत्वमुक्तं छांदोग्ये॥ तथा तैत्तिरीयकेपि जगज्जन्माद्यनुवादेन ब्रह्म

उच्यते॥ विशेषनिराकरणश्रुतीनां निराकांक्षार्थत्वात्॥ न ह्यात्मन एकत्वनित्यत्वशुद्धत्वाद्यवगतौ सत्यां भूयः काचिदाकां
क्षोपजायते॥ पुरुषार्थसमाप्तिबुद्ध्युपपत्तेः॥ तत्र को मोहः कः शोक एकत्वमनुपश्यतः॥ अभयं वै जनक प्राप्तोऽसि॥ विद्वा
न्न बिभेति कुतश्चन॥ एतं ह वाव न तपति किमहं साधु नाकरवं किमहं पापमकरवमित्यादिश्रुतिभ्यः॥ तथैव च विदुषां तु
ष्ट्यनुभवादिदर्शनात्॥ विकारानृताभिसंध्यपवादाच्च मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यतीति॥ अतो न विशेषनिराक
रणश्रुतीनामन्यशेषत्वमवगंतुं शक्यते॥ नैवमुत्पत्त्यादिश्रुतीनां निराकांक्षार्थप्रतिपादनसामर्थ्यमस्ति॥ प्रत्यक्षं तु ता
सामन्यार्थत्वं समनुगम्यते॥ तथा हि॥ तत्रैतच्छुंगमुत्पतितं सोम्य विजानीहि नेदममूलं भविष्यतीत्युपन्यस्योदर्के सत एवै
कस्य जगन्मूलस्य विज्ञेयत्वं दर्शयति॥ यतो वा इमानि भूतानि जायंते येन जातानि जीवंति यत्प्रयंत्यभिसंविशंति तद्विजिज्ञा
सस्व तद्ब्रह्मेति च॥ एवमुत्पत्त्यादिश्रुतीनामैकात्म्यावगमपरत्वान्नानेकशक्तियोगो ब्रह्मणोऽतश्च गंतव्यत्वानुपपत्तिः॥ ॥
न तस्य प्राणा उत्क्रामंति ब्रह्मैव सन् ब्रह्माप्येतीति च परस्मिन् ब्रह्मणि गतिं निवारयति॥ तद्व्याख्यातं स्पष्टो ह्येकेषामित्यत्र
गतिकल्पनायां च गंता जीवो गंतव्यस्य ब्रह्मणोऽवयवो विकारो वाऽन्यो वा ततः स्यात् अत्यंततादात्म्ये गमनानुपपत्तेः॥ ९



णएव ज्ञेयत्वं दर्शितमतः सृष्ट्यादिश्रुतीनां श्रुत्यैव निर्विशेषधीशेषताभानीत्यर्थः॥ एवं ब्रह्मणो निर्विशेषत्वान्न गंतव्यतेति फलितमाह एवा
मितिस्पष्टनिषेधाच्च परस्य न गंतव्यतेत्याह॥ न तस्येति॥ एवं गंतव्यालोचनया गतिं निरस्य गंत्रालोचनयापि निरस्यति गतिकल्पनायां चेत्या
दिना भेदाभेदेन द्वौ कल्पावत्यंतभेदस्तृतीयः कल्पः न त्वत्यंताभेदकल्पः किमिति नोक्तस्तत्राहात्यंतेति॥ ॥

कल्पत्रयेऽपि किं दूषणमिति पृच्छति यद्येवमिति। कल्पद्वयेऽपि दोषांतरमाह विकारावयवपक्षयोश्चेति विकारावयवरूपजीवविशिष्टस्य ब्रह्मणः॥
स्थिरत्वाज्जीवानां गत्यागती न स्यातां नतश्चचलातिस्थूलपाषाणस्थयोर्मंडूकपाषाणावयवयोश्चलनमस्तीत्यर्थः असाकं त्वज्ञानात्कल्पितोपा॥
धिभिर्गत्यागतिविभ्रम इति भावः॥ तृतीयकल्पमनूद्य विकल्प्य दूषयति अथेत्यादिना अभेदस्तु निविरोधरूपो दोषो मम नास्तीति भेदाभेदवाद्याह॥

यद्येवं ततः किं स्यादत उच्यते॥ यद्येकदेशस्तेनैकदेशिनो नित्यप्राप्तत्वान्न पुनर्ब्रह्मगमनमुपपद्यते॥ एकदेशैकदेशित्वकल्प
ना च ब्रह्मण्यनुपपन्ना निरवयवत्वप्रसिद्धेः॥ विकारपक्षेऽप्येतत्तुल्यं विकारेणापि विकारिणो नित्यप्राप्तत्वात्॥ न हि घटो मृदात्मतां परि
त्यज्यावतिष्ठते॥ परित्यागे वाऽभावप्राप्तेः विकारावयवपक्षयोश्च तद्वतः स्थिरत्वाद्ब्रह्मणः संसारगमनमप्यनवक्लृप्तं॥ अथा
न्य एव जीवो ब्रह्मणः सोऽणुर्व्यापी मध्यमपरिमाणो वा भवितुमर्हति॥ व्यापित्वे गमनानुपपत्तिर्मध्यमपरिमाणत्वे चाऽनित्यत्व।
प्रसंगोऽणुत्वे कृत्स्नशरीरवेदनानुपपत्तिः॥ प्रतिषिद्धे चाणुत्वमध्यमपरिमाणत्वे विस्तरेण पुरस्तात्परस्माच्चान्यत्वे जीवस्य त।
त्त्वमसीत्यादिशास्त्रबाधप्रसंगः॥ विकारावयवपक्षयोरपि समानोऽयं दोषः॥ विकारावयवयोस्तद्वतोऽनन्यत्वाददोष इति चेन्न मु
ख्यैकत्वानुपपत्तेः॥ सर्वेषु चैतेषु पक्षेष्वनिर्मोक्षप्रसंगः संसार्यात्मत्वानिवृत्तेः निवृत्तौ वा स्वरूपनाशप्रसंगो ब्रह्मात्मत्वानभ्युपग।
माच्च यत्तु कैश्चिज्जल्प्यते नित्यानि नैमित्तिकानि कर्माण्यनुष्ठीयंते प्रत्यवायानुत्पत्तये॥ काम्यानि प्रतिषिद्धानि च परिह्रियंते स्वर्गनरकान।
वाप्तये सांप्रतदेहोपभोग्यानि च कर्माण्युपभोगेनैव क्षप्यंत इत्यतो वर्तमानदेहपातादूर्ध्वं देहांतरप्रतिसंधानकारणाभावात्स्वरूपा
वस्थानलक्षणं कैवल्यं विनापि ब्रह्मात्मतयैवंवृत्तस्य सेत्स्यतीति॥ तदसत्प्रमाणाभावात्॥ न ह्येतच्छास्त्रेण केनचित्प्रतिपादितं मोक्षा
त्यानि १ — १ र्थी नित्यं समाचरेदिति।
विकारावयवयो रितिभिन्नयोरभेदो मुख्यो न युक्तः विरोधादिति परिहरति॥ नेति किं च पक्षत्रयमप्ययुक्तं संसारित्वस्य
तात्त्विकजीवभावस्य नाशे तात्त्विकजीवस्वरूपनाशप्रसंगान्न चास्माभिरिवत्वया ब्रह्मात्मत्वं जीवस्य तात्त्विकरूपमंगीकृतं यदस्य संसारनाशेऽपि न नश्ये
दित्याह॥ सर्वेष्विति ननु किं ब्रह्मत्वेन संसाराभावः किल मोक्षः स च कर्माभावमात्रेण सेत्स्यतीति कर्मजडानां मतमुद्भाव्य निरस्यति यत्त्वित्यादिना॥ तदिति॥ एवंवृ

नित्येषु सत्स्विति शेषाणामात्मनाभावादित्यर्थः॥

॥ तर्क एवमानमित्यत आह॥ नचैनत्तर्कयितुमिति ननु नवाप्येतत्तर्कमात्रमेकस्मिञ्जन्मन्यनेकविरुद्धफलानां कर्मणां भोगायोगादस्य वशि-
ष्टं कर्मजन्मांतरस्य निमित्तमित्याशंक्य तत्र मानमाह॥ कर्मशेषसद्भावसिद्धिश्चेति॥ संत्वनारब्धफलानि पुण्यपापानि तेषां नित्याद्यनुष्ठानेन ना-
या त्वजन्मांतरमिति शंकते स्यादेतदिति पुण्येन पुण्यस्य न नाशः अविरोधादन्यथातिप्रसंगात् पापस्यापि सर्वात्मना पुण्यनाश्यत्वे मानं नास्तीति

स्वमनीषिकयात्वेन तर्कितं॥ यस्मात्कर्मनिमित्तः संसारस्तस्मान्निमित्ताभावान्न भविष्यतीति॥ नचैनत्तर्कयितुं शक्यते॥ नि-
मित्ताभावस्य दुर्ज्ञानत्वाद्बहूनि हि कर्माणि जात्यंतरसंचितानीष्टानिष्टविपाकान्येकैकस्य जंतोः संभाव्यंते॥ तेषां विरुद्धफलानां यु-
गपदुपभोगासंभवात्कानिचिल्लब्धावसराणीदं जन्म निर्मिमते॥ कानिचित्तु देशकालनिमित्तप्रतीक्षाण्यासत इत्यतस्तेषामवशिष्टा-
नां साम्प्रतेनोपभोगेन क्षपणासंभवान्न यथावर्णितचरितस्यापि वर्तमानदेहपाते देहांतरनिमित्ताभावः शक्यते निश्चेतुं॥ कर्मशे-
षसद्भावसिद्धिश्च॥ तद्य इह रमणीयचरणास्ततः शेषेणेत्यादिश्रुतिस्मृतिभ्यः॥ स्यादेतत्॥ नित्यनैमित्तिकानि तेषां क्षेपकाणि
भविष्यंतीति॥ तन्न विरोधाभावात्॥ सति हि विरोधे क्षेप्यक्षेपकभावो भवति॥ न च जन्मांतरसंचितानां सुकृतानां नित्यनैमि-
त्तिकैरस्ति विरोधः॥ शुद्धिरूपत्वाविशेषात्॥ दुरितानां त्वशुद्धिरूपत्वात्सति विरोधे भवतु क्षपणं॥ ननु तावता देहांतरनिमि-
त्ताभावसिद्धिः सुकृतनिमित्तत्वोपपत्तेः दुश्चरितस्याप्यशेषक्षपणाऽनवगमात्॥ न च नित्यनैमित्तिकानुष्ठानात्प्रत्यवायानु-
त्पत्तिमात्रं न पुनः फलांतरोत्पत्तिरिति प्रमाणमस्ति॥ फलांतरस्याप्यनुनिष्पादिनः संभवात्॥ स्मरति ह्यापस्तंबः तद्यथाऽऽम्रे नि-
र्मिते फलार्थे छायागंधावनूत्पद्येते एवं धर्मं चर्यमाणमर्था अनूत्पद्यंत इति॥ न चासति सम्यक्दर्शने सर्वात्मना काम्यप्रतिषिद्ध-
वर्जनं जन्मप्रायणांतराले केनचित्प्रतिज्ञातुं शक्यं सुनिपुणानामपि सूक्ष्मापराधदर्शनात्॥ ६ ६ ॥

संचितपुण्यपापाभ्यां जन्मांतरं दुर्वारमित्याह॥ नन्वित्यादिना॥ क्रियमाणनित्यादिनापि जन्म स्यात्कर्मणा पितृलोक इत्यविशेषश्रुतेः स्मृते-
श्चेत्याह॥ न च नित्येति प्रत्यवायनिरासार्थे नित्याद्याचारे सत्यनुषङ्गात्फलांतरं निष्पद्यत इत्यत्र दृष्टांतस्तद्यथेति निर्मिते आरोपिते सतीत्यर्थः॥

तथापि काम्यादिकर्मसत्त्वान्निश्चयो नास्त्यत आह संशयि तत्त्वं विति ज्ञानं विना देहपाते मोक्षस्य चेति निश्चयालाभात्तत्त्वस्य रक्षनिरिति भावः॥
ब्रह्मभिन्नस्य जीवस्य कर्तृत्वादिस्वभावस्य मोक्षाशापि न युक्तेत्याह॥ न चेति कर्तृत्वादिरूपं कार्यं न स्वभावः किंतु तच्छक्तिरिति शंकते॥ स्या
देतदिति कार्यगम्यायाः शक्तेः कार्यस्यात्यंतानुत्पादे सत्त्वमयुक्तं अतः शक्तिसत्त्वे तद्विषयस्य कार्यस्यादृष्टदेशकालादिनिमित्तानां चात्मनाश

संशयितव्यं तु भवति तथापि निमित्ताभावस्य दुर्ज्ञानत्वमेव न चानभ्युपगम्यमाने ज्ञानगम्ये ब्रह्मात्मत्वे कर्तृत्वभोक्तृत्वस्वभावस्या
त्मनः कैवल्यमाकांक्षितुं शक्यं समग्रो ह्यय्यवत्स्वभावस्यापरिहार्यत्वात्॥ स्यादेतत् कर्तृत्वभोक्तृत्वकार्यमनर्थो न तच्छक्तिस्तेन शक्त्यव
स्थानेपि कार्यपरिहारादुपपन्नो मोक्ष इति॥ तच्च न शक्तिसद्भावे कार्यप्रसवस्य दुर्निवार्यत्वात्॥ अथापि स्यात्र केवला शक्तिः का
र्यमारभते अनपेक्ष्यान्यानि निमित्तानि अत एकाकिनी सा स्थितापि नापराध्यतीति॥ तच्च न निमित्तानामपि शक्तिलक्षणेन
संबंधेन नित्यसंबंधत्वात् तस्मात्कर्तृत्वभोक्तृत्वस्वभावे सत्यात्मन्यसत्यां विद्यागम्यायां ब्रह्मात्मतायां न कथंचन मोक्षं प्रत्याशास्ति॥ श्रु
तिश्च नान्यः पंथा विद्यतेयनायेति ज्ञानादन्यं मोक्षमार्गं वारयति॥ परस्मादनन्यत्वेपि जीवस्य सर्वव्यवहारलोपप्रसंगः प्रत्यक्षादिप्र
माणाऽप्रवृत्तिरिति चेन्न॥ प्राक्प्रबोधात्स्वप्नव्यवहारवदुपपत्तेः॥ शास्त्रं च यत्र हि द्वैतमिव भवति तदितर इतरं पश्यतीत्यादिनाऽ
प्रबुद्धविषये प्रत्यक्षादिव्यवहारमुक्त्वा पुनः प्रबुद्धविषये यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदित्यादिना तदभावं दर्शयति॥
तदेवं परब्रह्मविदो गंतव्यादिविज्ञानस्य बाधितत्वात् न कथंचन गतिरुपपादयितुं शक्या॥ किंविषयाः पुनर्गतिश्रुतय इत्युच्य
ते॥ सगुणविद्याविषया भविष्यंति॥ तथा हि॥ क्वचित्पंचाग्निविद्यां प्रकृत्य गतिरुच्यते॥ क्वचित्पर्यंकविद्यां क्वचिद्वैश्वानरविद्यां॥

क्तिद्वारा नित्यसंबद्धत्वान्मोक्षो न स्यादिति परिहरति न त्वेत्यादिना॥ मोक्षसिध्यर्थं जीवस्य ब्रह्मत्वांगीकारे संसारानुपपत्तिमाशंक्याज्ञानात्तदुप
पत्तिमसकृदुक्तां स्मारयति परस्मादित्यादिना प्रासंगिकं परिहृत्य परमं प्रकृतमुपसंहरति॥ तदेवमिति॥ ❦ ॥

ननु परविद्यायामप्याप्नोतिपदेन गतिः श्रुतेत्यत आह ब्रह्मविदाप्नोतीति वैफल्याच्च गतेर्न परविषयत्वमित्याहापि चेति॥ अनुचिंतनपक्षं प्रत्याह॥ न च नि-



यत्रापि ब्रह्मप्रक्रमत्य गतिरुच्यते॥ यथा प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुंडरीकं वेश्मेति।
यत तत्रापि वामनीत्वादिभिः सत्यकामादिभिश्च गुणैः सगुणस्यैवोपास्यत्वात्संभवति॥ न क्वचित्परब्रह्मविषया गतिः॥
श्राव्यते यथा गतिप्रतिषेधः श्राविततो न तस्य प्राणा उत्क्रामंतीति ब्रह्मविदाप्नोति परमित्यादिषु तु सत्यप्याप्नोतेर्गत्यर्थत्वे
वर्णितेन न्यायेन देशांतरप्राप्त्यसंभवात्स्वरूपप्रतिपत्तिरेवेयमविद्याध्यारोपितनामरूपप्रविलयापेक्षया भिधीयते॥ ब्रह्मैव।
संब्रह्माप्येतीत्यादिवदिति द्रष्टव्यं॥ अपि च परविषया गतिर्व्याख्यायमाना प्ररोचनाय वा स्यात् अनुचिंतनाय वा॥ तत्र प्ररो
चनं तावद्ब्रह्मविदो न गत्युक्त्या क्रियते स्वसंवेद्येनैवाव्यवहितेन विद्यासमर्पितेन स्वास्थ्येन तन्निसिद्धेर्न च नित्यसिद्धनिःश्रे
यसनिवेदनस्यासाध्यफलस्य विज्ञानस्य गत्यनुचिंतने काचिदपेक्षोपपद्यते॥ तस्मादपरब्रह्मविषया गतिः॥ तत्र परापर
ब्रह्मविवेकानवधारणेनापरस्मिन्ब्रह्मणि वर्तमाना गतिश्रुतयः परस्मिन्नध्यारोप्यंते॥ किं द्वे ब्रह्मणी परमपरं चेति॥ बाढं द्वे॥
एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकार इत्यादिदर्शनात्॥ किं पुनः परं ब्रह्म किमपरमित्युच्यते॥ यत्राविद्याकृतनामरू
पादिविशेषप्रतिषेधादस्थूलादिशब्दैर्ब्रह्मोपदिश्यते तत्परं॥ तदेव यत्र नामरूपादिविशेषेण केनचिद्विशिष्टमुपासनायो
पदिश्यते मनोमयः प्राणशरीरो भारूप इत्यादिशब्दैस्तदपरं॥ नन्वेवमद्वितीयश्रुतिरुपरुध्येत नाविद्याकृतनामरूपोपा
धिकतया परिहृतत्वात्॥ तस्य चापरब्रह्मोपासनस्य तत्सन्निधौ श्रूयमाणं स यदि पितृलोककामो भवतीत्यादि जगदैश्वर्यल
क्षणं संसारगोचरमेव फलं भवत्यनिवर्तितत्वादविद्यायास्तस्य च देशविशेषावबद्धत्वात्तत्प्राप्त्यर्थं गमनमविरुद्धं॥ ९॥



न्यसिद्धेति॥ कथं तर्हि केष्वित्परविषयत्वं गतेरुक्तमित्याशंक्य भाष्येत्याह॥ तत्र परापरेति॥ प्रश्नपूर्वकं परापरब्रह्मविभागं वदन्परब्रह्मणि गतेरर्थव

॥ व्यापिनो जीवस्य कथं गतिस्तत्राह ॥ सर्वगतत्वेपीति ॥ १४ ॥ एवं गंतव्यं निरूप्य गंतॄन्निर्धारयति ॥ अप्रतीकालंबनात् ॥ सएनान्ब्रह्म गमयतीत्यविशेषश्रुतेस्तत्क्रतुन्यायाच्च संशयमाहेदमिति ॥ अनियमाधिकरणे तत्वविदोन्यत्र सर्वोपासकानां मार्गोपसंहार उक्तः इदानीमप्रतीकोपास

सर्वगतत्वेपि चात्मन आकाशस्येव घटादिगमनेषु ध्याद्युपाधिगमने गमनप्रसिद्धिरित्यवादिष्म तद्गुणसारत्वादित्यत्र ॥ तस्मात्कार्यं बादरिरित्येष एव स्थितः पक्षः ॥ परं जैमिनिरिति तु पक्षांतरप्रतिभानमात्रप्रदर्शनं प्रज्ञाविकाशनायेति द्रष्टव्यं ॥ ५ ॥ १४ ॥ अप्रतीकालंबनान्नयतीति बादरायण उभयथादोषात्तत्क्रतुश्च ॥ १५ ॥ स्थितमेतत्कार्यविषया गतिर्न परविषयेति ॥ इदमिदानीं संदिह्यते किं सर्वान्विकारालंबनानविशेषेणैवामानवः पुरुषः प्रापयति ब्रह्मलोकमुत कांश्चिदेवेति ॥ किं तावत्प्राप्तं सर्वेषामेवैषां विदुषामन्यत्र परस्माद्ब्रह्मणो गतिः स्यात् ॥ तथा ह्यनियमः सर्वेषामित्यत्र अविशेषेणैवैषां विद्यांतरेष्ववतारितेत्येवं प्राप्ते प्रत्याह ॥ अप्रतीकालंबनानिति ॥ प्रतीकालंबनान्वर्जयित्वा सर्वान्न्यान्विकारालंबनान्नयति ब्रह्मलोकमिति बादरायण आचार्यो मन्यते ॥ नह्येवमुभयथाभावाभ्युपगमे कश्चिद्दोषोस्ति ॥

कानामेव मार्गो न सर्वेषां विकारोपासकानामित्युभयथाभावोक्तौ पूर्वोक्तविरोधः स्यान्न स्यादुपासकमात्रस्योत्तरमार्गसिद्धिरिति पूर्वपक्ष ॥ फलं सिद्धांते तूभयथाभावसिद्धिः ॥ अदोषादिति सूत्रे पदच्छेदः ॥

अविरोधादित्यर्थः॥ अनियमः सर्वेषामितिसूत्रे सर्वशब्दस्य प्रतीकोपासकान्यपरत्वादितिभावः यद्यपि प्रतीकध्यायिनां पितृयाणतृतीयस्थानयोरप्रवे
शादर्चिरादिमार्गो वाच्यस्तथापि तेषां विद्युत्पर्यंतमेव गमनमस्तु न ब्रह्मप्राप्तिर्ब्रह्मक्रतुत्वाभावात् यो यत् ध्यायति स तत्प्राप्नोतीति हि तत्क्रतुन्यायः श्रुतिमू
लः प्रतीकेषु च नामादिषु ध्येयेषु॥ ब्रह्मणो गुणत्वात् न ब्रह्मध्यायित्वमस्ति अस्य च न्यायस्य पंचाग्निविद्यायामाहत्यवादात् अन्यस्य वचनाद्बाध इष्ट इति

अनियमन्यायस्य प्रतीकव्यतिरिक्तेष्वप्युपासनेषूपपत्तेः॥ तत्क्रतुश्चास्योभयथाभावस्य समर्थको हेतुर्द्रष्टव्यः॥ यो हि ब्रह्मक्र
तुः स ब्राह्ममैश्वर्यमासीदेदिति श्लिष्यते॥ तं यथा यथोपासते तदेव भवतीति श्रुतेः॥ न तु प्रतीकेषु ब्रह्मक्रतुत्वमस्ति प्रतीकप्रधान
त्वादुपासनस्य॥ नन्वब्रह्मक्रतुरपि ब्रह्म गच्छतीति श्रूयते॥ यथा पंचाग्निविद्यायां स एनान् ब्रह्म गमयतीति भवतु यत्रैवमाहत्य
वाद उपलभ्यते॥ तदभावे त्वौत्सर्गिकेन तत्क्रतुन्यायेन ब्रह्मक्रतूनामेव तत्प्राप्तिर्नेतरेषामिति गम्यते॥ १५॥ विशेषं च दर्शयति॥ १६॥
नामादिषु प्रतीकोपासनेषु पूर्वस्मात्पूर्वस्मात् फलविशेषमुत्तरस्मिन्नुत्तरस्मिन्नुपासने दर्शयति॥ यावन्नाम्नो गतं तत्रास्य यथा
कामचारो भवति वाग्वाव नाम्नो भूयसी यावद्वाचो गतं तत्रास्य यथाकामचारो भवति॥ मनो वाव वाचो भूय इत्यादिना स चायं
फलविशेषः प्रतीकतंत्रत्वादुपासनानामुपपद्यते॥ ब्रह्मतंत्रत्वे तु ब्रह्मणोऽविशिष्टत्वात्कथं फलविशेषः स्यात्तस्मान्न प्रतीकाल
बनानामितरैस्तुल्यफलत्वमिति॥ ६॥ १६॥ इति श्रीमच्छारीरकमीमांसाभाष्ये श्रीमच्छंकरभगवत्पादकृतौ चतुर्थाध्यायस्य तृती



सूत्रभाष्यार्थः॥ १५॥ किंच प्रतीकतारतम्येन फलतारतम्यश्रुतेर्न प्रतीकध्यायिनां ब्रह्मप्राप्तिरित्याह विशेषं चेति तस्मादसति वचने ब्रह्मध्यायिन एव ब्र
ह्म गंतार इति सिद्धं॥ १६॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीगोविंदानंदभगवत्कृतौ भाष्यरत्नप्रभायां चतुर्थाध्यायस्य तृतीयपादः समाप्तः॥ भाष्य १६॥

॥ अथशारीरकसूत्रभाष्येरत्नप्रभायांचतुर्थोध्यायस्यचतुर्थपादःप्रारम्भः ॥

भा०
प्र०टी०
७१५

श्रीगणेशाय नमः॥ पूर्वपादे ब्रह्मोपासकानां कार्यब्रह्मप्राप्तिरुक्ता संप्रति तेषामैश्वर्यविशेषं ब्राह्मलोकिकं पादस्योत्तरार्धेन प्रपंचयिष्यंस्तादावभ्यर्हितपरवि
द्याप्राप्यं निर्विशेषब्रह्मभावमाह॥ संपद्याविर्भावः स्वेनशब्दात्॥ निर्गुणविद्याफलवाक्यमुदाहृत्य स्वशब्दस्य स्वीयागंतुकरूपस्वात्मरूपवाचित्वाभ्यां
संशयमाह॥ एवमिति॥ पूर्वपक्षे मोक्षस्य स्वर्गादविशेषः सिद्धांते विशेष इति फलं तत्र मोक्ष आगंतुकः फलत्वात्स्वर्गवदिति न्यायोपेतयाभिनिष्पत्ति

अ०पा०
४ ४

श्रीगणेशाय नमः॥१॥ संपद्याविर्भावः स्वेनशब्दात्॥१॥ एवमेवैष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपे
णाभिनिष्पद्यत इति श्रूयते॥ तत्र संशयः॥ किं देवलोकाद्युपभोगस्थानेष्विवागंतुकेन केनचिद्विशेषेणाभिनिष्पद्यते॥ आहोस्वि
दात्ममात्रेणेति॥ किं तावत्प्राप्तं स्थानांतरेष्विवागंतुकेन केनचिद्रूपेणाभिनिष्पत्तिः स्यान्मोक्षस्यापि फलत्वप्रसिद्धेरभिनिष्पद्यत इति।
चोत्पत्तिपर्यायत्वात्स्वरूपमात्रेण चेदभिनिष्पत्तिः पूर्वास्वप्यवस्थासु स्वरूपानपायात्तविभाव्येत॥ तस्माद्विशेषेण केनचिदभिनिष्प
द्यत इति॥ एवं प्राप्ते ब्रूमः॥ केवलेनैवात्मनाविर्भवति न धर्मांतरेणेति॥ कुतः स्वेन रूपेणाभिनिष्पद्यत इति स्वशब्दादन्यथा हि स्वश
ब्देनेति विशेषणमनवक्लृप्तं स्यान्ननु आत्मीयाभिप्रायः स्वशब्दो भविष्यतीति न तस्यावचनीयत्वाद्येनैव हि केनचिद्रूपेणाभिनिष्पद्यते तत्तस्य
वात्मीयत्वोपपत्तेः स्वेनेति विशेषणमनर्थकं स्यादात्मवचनतायां त्वर्थवत्केवलेनैवात्मरूपेणाभिनिष्पद्यते नागंतुकेनापररूपे
णापीति॥१॥ कः पुनर्विशेषः पूर्वास्ववस्थास्विह च स्वरूपानपायसाम्ये सतीत्यत आह॥ मुक्तः प्रतिज्ञानात्॥२॥ योत्राभिनिष्पद्यत इत्यु
क्तः स मर्वबंधविनिर्मुक्तः शुद्धेनैवात्मनावतिष्ठते॥ पूर्वत्र त्वंधोभवत्यपि रोदितीव विनाशमेवापीतो भवतीति चावस्थात्रयकलुषिते
नात्मनेत्ययं विशेषः॥ कथं पुनरवगम्यते मुक्तोयमिदानीं भवतीति॥ प्रतिज्ञानादित्याह॥ तथा ह्येतं त्वेव ते भूयोनुव्याख्यास्यामीत्य
वस्थात्रयदोषविहीनमात्मानं व्याख्येयत्वेन प्रतिज्ञायाशरीरं वाव संतं॥ श्रुत्या पूर्वपक्षमाह॥ किमित्यादिना॥ स्वशब्दश्रुतिबाधितो
न्यायः॥ अभिनिष्पत्तिश्च साक्षात्कार इत्यभिप्रायाबंधध्वंसजन्मनौपचारिकी वेति मत्वा सिद्धांतयति॥ एवमिति मोक्षस्य फलत्वेन प्राप्तागंतुकत्वनि
रासार्थः स्वशब्द इति युक्तं स्वीयवाचित्वे त्वनर्थकानुवादः स्यादित्यर्थः॥१॥ सूत्रांतरं गृह्णाति कः पुनरिति॥ जागरिते ह्यांध्यादिदेहधर्मवान्भवति स्वप्ने तु हतद

राम०
७१५

अपिचपुत्रादिनाशाद्रोदितीव भवतिसुषुप्तौतु विशेषाज्ञानाद्धिनष्टइवेतिबंधदशायां कलुषितात्मनातिष्ठति मोक्षेतु विगलिताखिलदुःखःपवितःप्रद्योत-
मानपूर्णानंदात्मनावतिष्ठतइति महान्विशेषइत्यर्थः॥२॥ कार्यगोचरमितिकार्यंज्योतिःप्राप्तमित्यर्थः॥ कार्यंप्राप्तोपिमुक्तः किंनस्यादित्यतआह॥ नचाननिवृत्त

नप्रियाप्रियेस्पृशतइतिचोपन्यस्यस्वेनरूपेणाभिनिष्पद्यतेसउत्तमःपुरुषइतिचोपसंहरति॥ तथाख्यायिकोपक्रमेपियआत्मापहत
पाप्माविजरोविमृत्युरित्यादिमुक्तात्मविषयमेवप्रतिज्ञानं॥ फलत्वप्रसिद्धिरपिमोक्षस्यबंधनिवृत्तिमात्रापेक्षानापूर्वोपजननापेक्षा॥ य
दप्यभिनिष्पद्यतइत्युत्पत्तिपर्यायत्वंतदपिपूर्वावस्थापेक्षं॥ यथारोगनिवृत्तावरोगोभिनिष्पद्यतइतितद्वत्स्याद्दोषः॥२॥ आत्माप्रकरणा
त्॥३॥ कथंपुनर्मुक्तइत्युच्यते॥ यावतापरंज्योतिरुपसंपद्येतिकार्यगोचरमेवैनंश्रावयति॥ ज्योतिःशब्दस्यभौतिकेज्योतिषिरूढत्वात्॥
नचाननिवृत्तोविकारविषयात्कश्चिन्मुक्तोभवितुमर्हति॥ विकारस्यार्तत्वप्रसिद्धेरिति॥ नैषदोषोयतआत्मैवात्रज्योतिःशब्देनावेद्यते॥ प्रकर
णात्॥ यआत्मापहतपाप्माविजरोविमृत्युरितिहिप्रकृतेपरस्मिंश्चात्मनिनाकस्माज्झटितिकंज्योतिःशक्यंग्रहीतुं॥ प्रकृतहानाप्रकृतप्रक्रियाप्रसं
गात् ज्योतिःशब्दस्त्वात्मन्यपिदृश्यते॥ तद्देवाज्योतिषांज्योतिरिति॥ प्रपंचितंचैतत्ज्योतिर्दर्शनादित्यत्र॥३॥ अविभागेनदृष्टत्वात्॥४॥ प
रंज्योतिरुपसंपद्यस्वेनरूपेणाभिनिष्पद्यतेयःसकिंपरस्मादात्मनःपृथगेवभवत्युताविभागेनैवावतिष्ठतइतिवीक्षायांसतत्रपर्यंतीत्यधिकर
णाधिकर्तव्यनिर्देशात्ज्योतिरुपसंपद्येतिचकर्तृकर्मनिर्देशात्भेदेनैवावस्थानमितियस्यमतिस्तंव्युत्पादयति॥ अविभक्तएवपरेणात्मनामु
क्तोऽवतिष्ठते॥ कुतः दृष्टत्वात्॥ तथाहि॥ तत्त्वमस्यहंब्रह्मास्मियत्रनान्यत्पश्यतिनतुतद्द्वितीयमस्तिनतोन्यद्विभक्तंयत्पश्येदित्येवमादीनि
वाक्यान्यविभागेनैवपरमात्मानंदर्शयंति॥ यथादर्शनमेवचफलंयुक्तंतत्क्रतुन्यायाद्यथोदकंशुद्धेशुद्धमासिक्तंतादृगेवभवति॥ एवंमुनेर्वि
जानतआत्माभवतिगौतमेतिचैवमादीनिमुक्तस्वरूपेणपराणिवाक्यान्यविभागमेवदर्शयंतिनदीसमुद्रादिनिदर्शनानिच॥ भेद-
निर्देशस्त्वभेदेप्युपचर्यतेसभगवः कस्मिन्प्रतिष्ठितइतिस्वेमहिम्नीति॥ आत्मरतिरात्मक्रीडइतिचैवमादिदर्शनात्॥४॥२॥ ❖ ॥
निरूप२
इति॥३॥ अविभागेनदृष्टत्वात्॥ स्वरूपस्थितंमुक्तमुपजीव्यवादिविवादाद्ब्रह्मभेदाभेदसंशयेसत्यत्यंतभेदंपूर्वपक्षमुक्त्वासिद्धांतमाह॥ यसेति॥४॥

ब्राह्मेणजैमिनिः॥ उक्तं ब्रह्मस्वरूपमुपजीव्य स किं सत्येन सर्वज्ञत्वादिधर्मेणयुक्तश्चिद्रूप उत धर्मस्य शशशृंगवदत्यंतासत्वाच्चिन्मात्रात्मना तिष्ठति किं वा वस्तुतश्चिन्मात्रोपि जीवांतरव्यवहारदृष्ट्या कल्पितसर्वज्ञत्वादिमानिति मुनिविप्रतिपत्तेः संशये सत्यागंपूर्वपक्षमाह॥ अथुनेत्यादिना॥ नत्वत्पक्षसिद्धेरेवं फलं द्रष्टव्यं सोन्वेष्टव्य इति विध्यर्थ उद्देशोय आत्मेत्यादिरुपन्यासशब्दार्थः॥ आदिपदाद्विधिव्यपदेशग्रहः॥ नत्राज्ञातज्ञापको विधिस्तमाह॥ तथा सनत्रेति॥

ब्राह्मेण जैमिनिरुपन्यासादिभ्यः॥ ५॥ स्थितमेतत्स्वेन रूपेणेत्यत्रात्ममात्ररूपेणाभिनिष्पद्यते नागंतुकेनापररूपेणेति॥ अधुनातु तद्विशेषबुभुत्सायामभिधीयते॥ स्वमस्य रूपं ब्राह्ममपहतपाप्मत्वादिसत्यसंकल्पत्वावसानं तथा सर्वज्ञत्वं सर्वेश्वरत्वं च तेन स्वरूपेणाभिनिष्पद्यत इति जैमिनिराचार्यो मन्यते॥ कुतः॥ उपन्यासादिभ्यस्तथात्वावगमात्॥ तथाहि॥ य आत्मापहतपाप्मेत्यादिना सत्यकामः सत्यसंकल्प इत्येवमंतेनोपन्यासेनैवमात्मकतामात्मनो बोधयति॥ तथा स तत्र पर्येति जक्षत्क्रीडन्रममाण इत्यैश्वर्यरूपमावेदयति॥ तस्य सर्वेषु लोकेषु कामचारो भवतीति च॥ सर्वज्ञः सर्वेश्वर इत्यादिव्यपदेशाश्चैवं उपपन्ना भविष्यंतीति॥ ५॥ चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः॥ ६॥ यद्यप्यपहतपाप्मत्वादयो भेदेनैव धर्मा निर्दिश्यंते तथापि शब्दविकल्पजा एवैते॥ पाप्मत्वादिनिवृत्तिमात्रं हि तत्र गम्यते॥ चैतन्यमेव त्वस्यात्मनः स्वरूपमिति तन्मात्रेण रूपेणाभिनिष्पत्तिर्युक्ता॥ तथा च श्रुतिः एवं वा अरेऽयमात्मानंतरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवेत्येवं जातीयिकाऽनुहीना भविष्यति॥ सत्यकामत्वादयस्तु यद्यपि वस्तुस्वरूपेणैव धर्मा उच्यंते सत्याः कामा अस्येति तथाप्युपाधिसंबंधाधीनत्वात्तेषां॥ न चैतन्यवत्स्वरूपत्वसंभवोऽनेकाकारत्वप्रतिषेधात्॥ प्रतिषिद्धं हि ब्रह्मणोनेकाकारत्वं न स्थानतोपि परस्योभयलिंगमित्यत्र॥ ९९ सर्वज्ञ इत्यादिस्तु व्यपदेश अयं हि नोद्देशः विध्यभावान्नापि विधिः सिद्धवन्निर्देशादित्यर्थः॥ ५॥ सत्यत्वादिधर्माणां सत्यत्वं दूषयन्नत्यंतासत्वपक्षमाह चितितन्मात्रेणेति॥ चितिश्चैतन्यं शब्द ज्ञानाद्यो विकल्पो सत्प्रत्ययस्तज्जा अत्यंतासंत इति यावत्॥ अस्त्वभावरूपधर्माणामसत्वं भावधर्माणां तु सत्वमित्याशंक्य तेषामप्यौपाधिकत्वादस

चिन्मात्रे मुक्ते जक्षणादिश्रुतिः कथं तत्राह ॥ अत एवेति ॥ सर्वधर्मनिषेधादेवेत्यर्थः ॥ ६ ॥ धर्माणां सत्यत्वमसत्यं तासत्त्वं चेति पक्षद्वयमयुक्तं अद्वै-
तश्रुतीनां सर्वज्ञत्वादिश्रुतिव्यवहारयोश्च बाधापातादतस्तृतीयपक्षः श्रेयानिति सिद्धान्तयति ॥ एवमपीति ॥ अत्र केचिन्मुह्यन्ति ॥ अखंडचि-
न्मात्रज्ञानान्मुक्तस्याज्ञानाभावात्कुत आज्ञानिकधर्मयोग इति तद्व्यं बोधनीयाः ॥ य ईश्वरधर्मास्त एव चिदात्मनि मुक्ते जीवान्तरैर्व्यवह्रियन्त
इति ॥ न च मूलाविद्यैक्यात्तन्नाशे कुतो जीवान्तरमिति वाच्यं न वयं तन्नाशे जीवान्तरव्यवहारं ब्रूमः ॥ किन्तु तदंशनाशे नांशान्तराध्यात्मिक ।

अत एव जक्षणादिसंकीर्तनमपि दुःखाभावमात्राभिप्रायं स्तुत्यर्थमात्मरतिरित्यादिवच्च द्विमुख्यान्येव रन्तिक्रीडादि ।
श्रुतान्यात्मनिमित्तानि शक्यं तेवर्णयितुं द्वितीयविषयत्वात्तेषां ॥ तस्मान्निरस्ताशेषप्रपंचेन प्रसन्नेनाव्यपदेश्येन बो-
धात्मनाभिनिष्पद्यत इत्यौडुलोमिराचार्यो मन्यते ॥ ६ ॥ एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॥ ७ ॥ एव-
मपि पारमार्थिकचैतन्यमात्रस्वरूपाभ्युपगमेपि व्यवहारापेक्षया पूर्वस्याप्युपन्यासादिभ्योवगतस्य ब्राह्मस्यैश्वर्यरू-
पस्याप्रत्याख्यानादविरोधं बादरायण आचार्यो मन्यते ॥ ७ ॥ ३ ॥ संकल्पादेव तु तच्छ्रुतेः ॥ ८ ॥ हार्दविद्यायां श्रूयते ॥ स
यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्तीत्यादि ॥ तत्र संशयः किं संकल्प एव केवलः पित्रादिस-
मुत्थानहेतुरुत निमित्तान्तरसहित इति ॥ तत्र सत्यपि संकल्पादेवेति श्रवणे लोकवन्निमित्तान्तरापेक्षतायुक्ता ॥ यथा लोके-
स्मदादीनां संकल्पाद्गमनादिभ्यश्च हेतुभ्यः पित्रादिसंपत्तिर्भवत्येवं मुक्तस्यापि स्यादेवं दृष्टविपरीतं न कल्पितं भविष्यति ॥ संकल्पा-
देवेति तु राजवत्संकल्पितार्थसिद्धिकरी साधनान्तरसामग्रीं सुलभामपेक्ष्योच्यते ॥ ११ शरीरद्वयाभिमानिनो मुक्तावंशान्तरोपाधिकाजी-

वाव्यवहर्तार इति वदामः तर्हि नानाविद्यापक्ष एव कुतो नाद्रियते जीवभेदस्यावश्यकत्वादिति चेन्न प्रकृतिनानात्वं प्रतिजीवं प्रपंचभेद इत्याद्यप्रामाणि-
कानेकार्थगौरवादिति सर्वं चतुरस्रं मतमेकाविद्यापक्ष एव श्रेयान् अंशभेदेन च बंधमुक्तिव्यवस्थेति संक्षेपः ॥ ७ ॥ ३ ॥ एवं परविद्याफलमुक्तमिदा-
नीमपरविद्याफलं प्रपंचयति संकल्पादेव तु तच्छ्रुतेः ॥ एवकारस्यायोगान्ययोगव्यवच्छेदसाधारण्यात्संशयः ब्रह्मलोकं गतस्योपासकस्य संक-

भोगसामग्रीसंकल्पत्वात्स्मृत्यादिसंकल्पवत्॥ नचैवकारविरोधः संकल्पेनसामग्र्या अयोगव्यवच्छेदेनसौलभ्यार्थत्वात्॥ यत्तानंगीकारेभोगप्रकारसिद्धेरेवेतिपूर्वपक्षार्थः॥ अत्रलोकवत्ज्ञानानुसरणंफलंसिद्धान्तेतुविद्याबलेनसंकल्पस्यैवभोगपुष्टिकरत्वसिद्धिरितिभेदः किंचयदि भोगसंकल्पानंतरमपि यत्नांतरसाध्यनिमित्तापेक्षास्यात्तर्हि निमित्तप्राप्तेः प्राक् जातसंकल्पस्यवंध्यत्वंस्यात् भोगेविलंबात्ततःस्वल्प।

नचसंकल्पमात्रसमुत्थानाः पित्रादयोमनोरथविजृंभितवच्चंचलत्वात्पुष्कलंभोगंसमर्पयितुंपर्याप्ताः स्युरिति॥ एवंप्राप्तेब्रूमः॥ संकल्पादेवतुकेवलात्पित्रादिसमुत्थानमिति॥ कुतस्तच्छ्रुतेः संकल्पादेवास्यपितरः समुत्तिष्ठंतीत्यादिकाहिश्रुतिर्निमित्तांतरापेक्षायांपीड्येत॥ निमित्तांतरमपितुयदिसंकल्पानुविधाय्येवस्यात्भवतुनतुप्रयत्नांतरसंपाद्यंनिमित्तांतरमितीष्यतेप्राक्नतत्संपत्तेर्वंध्यसंकल्पत्वप्रसंगात्नचश्रुत्यवगम्येर्थेलोकवदितिसामान्यतोदृष्टंक्रमतेसंकल्पबलादेवचैषांयावत्प्रयोजनंस्थैर्योपपत्तिः प्राकृतसंकल्पविलक्षणत्वान्मुक्तसंकल्पस्य॥८॥ अतएवचानन्याधिपतिः॥९॥ अतएवचावंध्यसंकल्पत्वादनन्याधिपतिर्विद्वान्भवति॥ नास्यान्योधिपतिर्भवतीत्यर्थः॥ नहिप्राकृतोपिसंकल्पयन्नन्यस्वामिकत्वमात्मनः सत्यांगतौसंकल्पयति॥ श्रुतिश्चैतद्दर्शयत्यथयइहात्मानमनुविद्यव्रजंत्येतांश्चसत्यान्कामांस्तेषांसर्वेषुलोकेषुकामचारोभवतीति॥९॥४॥ अभावंबादरिराहह्येवं॥१०॥ संकल्पादेवास्यपितरःसमुत्तिष्ठंतीत्यादिश्रुतेर्मनस्तावत्संकल्पसाधनंसिद्धं॥ शरीरेंद्रियाणिपुनःप्राप्तैश्वर्यस्यविदुषः संतिनवासंतीतिसमीक्ष्यते॥ तत्रबादरिस्तावदाचार्यः शरीरस्येंद्रियाणांचाभावंमहीयमानस्यविदुषोमन्यते॥ कस्मादेवंह्याहाम्नायोमनसैतान्कामान्पश्यन्रमतेयएतेब्रह्मलोकइति॥

॥ संकल्पश्रुतेर्नयत्नांतरापेक्षेत्याह॥ निमित्तांतरमपित्विति॥८॥ नन्वीश्वराधीनस्यविदुषः कथंसंकल्पमात्राद्भोगसिद्धिस्तत्राह॥ अतएवेति॥ ईश्वरधर्मएवविदुष्याविर्भूतइतिनसंकल्पभंगइतिभावः॥९॥ एवकारवन्मनसेतिविशेषणेनान्ययोगव्यवच्छेदाद्देहाद्यभावइतिपूर्वपक्षयति॥ अभावंबादरिराहह्येवं॥ अत्रापिवादिविवादात्संशयः तत्रदेहादयोनसंत्येवसदासंत्येवेतिचपक्षद्वयंपूर्वपक्षः कालभेदेनेच्छयासंतिनसंतिचेतिसिद्धांतपक्षोद्रष्टव्यः॥ ॥

फलं तु नतन्त्कृते मुख्यत्वमिति विवेकः॥ १०॥ ११॥ द्वादशाहवदितियथैवंविद्वांसः सत्रमुपयंतीत्युपायिचोदनागम्यत्वश्रुतेर्द्वादशाहस्य स त्रत्वं आसतेतिचोपयंतीतिवाचोदितत्वं सत्रलक्षणमितिस्थितेः तथाद्वादशाहेन प्रजाकामं याजयेदितियजतिचोदनादर्शनाच्चियनकर्तृ

यदि मनसा शरीरेंद्रियैश्च विहरेत् मनसेति विशेषणं न स्यात्तस्मादभावः शरीरेंद्रियाणां मोक्षे॥ १०॥ भावं जैमिनिर्विकल्पामा ननात्॥ ११॥ जैमिनिस्त्वाचार्यो मनोवच्छरीरस्यापि सेंद्रियस्य भावं मुक्तं प्रतिमन्यते॥ यतः स एकधा भवति त्रिधा भवतीत्यादिना नेकधाभावविकल्पमामनंति॥ नह्यनेकविधता विना शरीरभेदेनांजसी स्यात्॥ यद्यपि निर्गुणायां भूमविद्यायां अयमनेक धाभावविकल्पः पठ्यते तथापि विद्यमानमेवेदं सगुणावस्थायामैश्वर्यं भूमविद्यास्तुतये संकीर्त्यत इत्यतः सगुणविद्याफलभावे नोपतिष्ठत इत्युच्यते॥ ११॥ द्वादशाहवदुभयविधं बादरायणोतः॥ १२॥ बादरायणः पुनराचार्यो नस्ववोभयश्रुतिलिंगदर्शना दुभयविधत्वं साधु मन्यते॥ यदा सशरीरतां संकल्पयति तदा सशरीरो भवति यदा त्वशरीरतां तदाऽशरीर इति॥ सत्यसंकल्प त्वात् संकल्पवैचित्र्याच्च॥ द्वादशाहवत् यथा द्वादशाहः सत्रमहीनश्च भवति उभयलिंगश्रुतिदर्शनादेवमिदमपीति॥ १२॥ तन्व भावे संध्यवदुपपत्तेः॥ १३॥ यदा तु तनोः सेंद्रियस्य शरीरस्याभावस्तदा यथा संध्ये स्थाने शरीरेंद्रियविषयेष्वविद्यमानेष्वप्युप लब्धिमात्रा एव पित्रादिकामा भवंति॥ एवं मोक्षेपि स्युरेवं ह्येतदुपपद्यते॥ १३॥ भावे जाग्रद्वत्॥ १४॥ भावे पुनस्तनोर्यथा जागरि ते विद्यमाना एव पित्रादिकामा भवंत्येवं मुक्तस्याप्युपपद्यते॥ ५॥ १३॥ प्रदीपवदावेशस्तथा हि दर्शयति॥ १५॥ भावं जैमिनिर्विक ल्पामननादित्यत्र सशरीरत्वं मुक्तस्योक्तं तत्र त्रिधाभावादिषु अनेकशरीरसर्गे किं निरात्मकानि शरीराणि दारुयंत्राणीव सृज्यंते किं वा सात्मकान्यस्मदादिशरीरवदिति भवति वीक्षा तत्र चात्ममनसोर्भेदानुपपत्तेरेकेन शरीरेण योगादितराणि शरीराणि निरात्मकानी त्येवं प्राप्ते प्रतिपद्यते॥ प्रदीप

वावयमेन हि राज्यादिवदहीनत्वं चेत्यर्थः॥ १२॥ १३॥ प्रदीपवदावेशः॥ संकल्पमात्रान्निर्मितदेहानुपजीव्यते षूभय थादर्शनात्संशयमाह॥ भावमिति॥ अनादिलिंगशरीरस्यैकस्मिन्नेव शरीरे भावान्निर्मितानेकदेहेषु भोगासिद्धिः पूर्वपक्षफलं॥

अ॰पा॰ प्र॰दी॰ ४६

चिद्रांतेनत्विहिरितिमत्वासूत्रंव्याचष्टे॥ यथेत्यादिना सएकधा त्रिधा पंचधेत्यादिश्रुत्या विदुषस्त्वानेकधाभाव उक्तः विद्वांस्तु न देहो नापि चिन्मात्रः किं
किंतु...नोपहितात्मा न च तस्य लिंगभेदं विनाऽनेकत्वं संभवति॥ अतः श्रुतिबलादेकस्यैवानादिलिंगस्यानेकदेहेषु प्रवेशेन भेद एष्टव्यः यद्यपि मूलप्रदी
पस्य वर्त्यंतरेषूत्पन्नदीपानां चात्यंतभेदोऽस्ति लिंगस्य तु देहभेदकृतो भेदो न स्वतः स्वतो लिंगभेदे तदुपहितजीवभेदादनुसंधानानुपपत्तेः॥ आगंतुका
नेकलिंगसृष्टावसत्कार्यवादापाताच्च तथापि प्रदीपतज्जात्यैकेन व्यक्तिष्वेकारोपाद्दृष्टांतदार्ष्टांतिकयोः साम्यं द्रष्टव्यं॥ तथा च यथा प्रदीपोऽनेकवर्तिषु प्र

यथा प्रदीप एकोऽनेकप्रदीपभावमापद्यते विकारशक्तियोगादेवमेकोऽपि सन् विद्वानैश्वर्ययोगादनेकभावमापद्य सर्वाणि शरी
राण्याविशति॥ कुतः तथा हि दर्शयति शास्त्रमेकस्यानेकभावं स एकधा भवति त्रिधा भवति पंचधा सप्तधा नवधेत्यादि॥ नैतद्दारुयंत्रो
पमाभ्युपगमेऽवकल्पते॥ नापि जीवांतरावेशे॥ न च निरात्मकानां शरीराणां प्रवृत्तिः संभवति॥ यत्त्वात्ममनसोर्भेदानुपपत्तेर
नेकशरीरयोगासंभव इति॥ नैष दोषः॥ एकमनोनुवर्तीनि समनस्कान्येवापराणि शरीराणि सत्यसंकल्पत्वात्स्रक्ष्यति॥ स्र
ष्टेषु च तेषूपाधिभेदादात्मनोऽपि भेदेनाधिष्ठातृत्वं योक्ष्यते॥ एषैव च योगशास्त्रेषु योगिनामनेकशरीरयोगप्रक्रिया॥१५॥ क
थं पुनर्मुक्तस्यानेकशरीरावेशादिलक्षणमैश्वर्यमभ्युपगम्यते॥ यावता तत्केन कं विजानीयान्न तु तद्द्वितीयमस्ति ततोऽन्य
द्विभक्तं यद्विजानीयात्॥ सलिल एको द्रष्टाऽद्वैतो भवतीति चैवं जातीयका श्रुतिर्विशेषविज्ञानं वारयतीति॥ अत उत्तरं पठति॥

विशति एवं विद्यायोगबलाद्धि हि लिंगस्य व्यापित्वादनेकदेहेषु युगपदावेश इति सूत्रार्थः॥ विदुषोऽनेकधात्वं श्रुतमन्यथा न घटत इत्याह॥ नैतदिति॥ इत॥
श्वसात्मकत्वमित्याह॥ न च निरात्मकानामिति॥ यदनादिमन एकदेहस्थं तदनुसारीणि देहांतरस्थानि मनांसि भवंति तदवस्थानां तन्नियम्यत्वसंभवा
दिति॥ अत्र योगशास्त्रसंमतिमाह॥ एषैवेति॥ निर्माणचित्तान्यस्मितामात्रात्प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषामिति हि भगवत्पतंजलिना सू
त्रितं योगिनोऽभिमानमात्रान्निर्माणचित्तानि निर्माणदेहेषु भवंति तेषां नियामकमनादिचित्तमित्यर्थः॥१५॥ उत्तरसूत्रव्यावर्त्यशंकामाह कथं पुनरि

ननुतद्द्वितीयमस्तीतिक्वचित्सुषुप्तिमधिकृत्योक्तंतत्केनकमित्यादिक्वचिन्मुक्तिंप्रकृत्योक्तंएवंविशेषज्ञानाभाववचनंसुषुप्तिमुक्त्योरन्यतरापेक्षंस
गुणोपासकस्यभोगोक्तौनविरुध्यतेभिन्नविषयत्वादित्याह॥स्वाप्ययेति॥नत्रैवश्रुतौतदधिकारवशात्सुषुप्त्यादिप्रकरणबलादुक्तवचनाना
मन्यतरापेक्षात्वमाविष्कृतंहियतस्ततोवगम्यतइत्यर्थः॥अत्रसमुत्थानादिवाक्यंमुक्तिविषयंयत्रसुप्तइतिसुप्तिविषयमितिविभागः॥१६॥

स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतंहि॥१६॥स्वाप्ययःसुषुप्तंस्वमपीतोभवतितस्मादेनंस्वपितीत्याचक्षतइतिश्रुतेःसं
पत्तिःकैवल्यं॥ब्रह्मैवसन्ब्रह्माप्येतीतिश्रुतेस्तयोरन्यतरामवस्थामपेक्ष्यैतद्विशेषसंज्ञाभाववचनंक्वचित्सुषुप्तावस्थामपे
क्ष्योच्यते॥क्वचित्कैवल्यावस्थां॥कथमवगम्यतेयतस्तत्रैवैतदधिकारवशादाविष्कृतमेतेभ्योभूतेभ्यःसमुत्थायतान्येवा
नुविनश्यतिनप्रेत्यसंज्ञास्तीति॥यत्रत्वस्यसर्वमात्मैवाभूद्यत्रसुप्तोनकंचनकामंकामयतेनकंचनस्वप्नंपश्यतीत्यादिश्रुति
भ्यः॥सगुणविद्याविपाकावस्थानंत्वेतत्स्वर्गादिवदवस्थांतरंयत्रैतदैश्वर्यमुपवर्ण्यतेतस्माददोषः॥१६॥ ६॥जगद्व्यापार
वर्जंप्रकरणादसंनिहितत्वाच्च॥१७॥येसगुणब्रह्मोपासनात्सहैवमनसेश्वरसायुज्यंव्रजंतिकिंतेषांनिरवग्रहमैश्वर्यंभव
त्याहोस्वित्सावग्रहमितिसंशयः॥किंतावत्प्राप्तंनिरंकुशमेवैषामैश्वर्यंभवितुमर्हति॥आप्नोतिस्वाराज्यंसर्वेस्मैदेवाबलि
मावहंतितेषांसर्वेषुलोकेषुकामचारोभवतीत्यादिश्रुतिभ्यः॥इत्येवंप्राप्तेपठति॥जगद्व्यापारवर्जमिति॥जगदुत्पत्त्यादिव्या
पारंवर्जयित्वान्यदणिमाद्यात्मकमैश्वर्यंमुक्तानांभवितुमर्हति॥जगद्व्यापारस्तुनित्यसिद्धस्यैवेश्वरस्य॥कुतः॥तस्यतत्रप्रकृ

॥६॥जगद्व्यापारवर्जं॥संकल्पादेवेत्यादिनोक्तैश्वर्यस्यजगत्सृष्ट्यादिव्यतिरिक्तविषयत्वेनात्रापवादात्संगतिः॥उभयथादर्शनात्संशयः
ईश्वरनानात्वंपूर्वपक्षफलंसिद्धांतेतुविद्यायोगिनामीश्वरनियम्यत्वादेकस्यनित्यसिद्धस्येश्वरस्यैवजगत्कर्तृत्वसिद्धिरितिविवेकः प्रलया
[illegible]पयेत्रस्येक्षणपूर्वकंकर्तृत्वंश्रुतौप्रकृतंतस्यैवनियंतृत्वादिर्जगद्व्यापारः॥नह्युपासकानांदेहंविनेक्षणंसंभवति॥ ३ ७०७ ३॥

...त्यसिद्धत्वान् शब्दैकसमधिगम्यत्वाच्च जगत्स्रष्टृत्वं युक्तं न तु तत्प्रसादलब्धसिद्धीनां जीवानामित्याह ॥ नित्यशब्दनिबंधनत्वाच्चेति ॥ अ॰पा॰ ४ ४
...विदुषां समप्राधान्ये मिथो विरोधः एकं प्रत्यन्येषां गुणत्वे त्वेक एवेश्वर इत्याह ॥ समनस्कत्वादिति ॥ १७ ॥ अधिकारे नियोजयत्यादित्यादीनित्या
...कारिकः स चासौ मंडलस्थश्चेति तस्य प्राप्यत्वोक्तेरित्यर्थः मनसस्पतिः सूर्यमंडलान्तस्थः परमात्मा तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः

असन्निहितत्वाच्चेतरेषां ॥ परस्य वह्नीश्वरो जगद्व्यापारे धिकृतस्तमेव प्रकृत्योत्पत्याद्युपदेशात् ॥ नित्यशब्दनिबंधनत्वा
च्चेतदन्वेषणविजिज्ञासनपूर्वकं त्वितरेषामणिमाद्यैश्वर्यं श्रूयते ॥ तेनासंन्निहितास्ते जगद्व्यापारे ॥ समनस्कत्वादेव चैते
षामनेकमत्येकस्य चित्स्थित्यभिप्रायः कस्यचित्संहाराभिप्राय इत्येवं विरोधोपि कदाचित्स्यादथ कस्यचित्संकल्प
मन्वन्यस्य संकल्प इत्यविरोधः समर्थ्येत ततः परमेश्वराकूततंत्रत्वमेवेतरेषामिति व्यवतिष्ठते ॥ १७ ॥ प्रत्यक्षोपदेशा
दिति चेन्नाधिकारिकमंडलस्थोक्तेः ॥ १८ ॥ अथ यदुक्तमाप्नोति स्वाराज्यमित्यादि प्रत्यक्षोपदेशान्निरवग्रहमैश्वर्यं विदु
षां न्याय्यमिति तत्परिहर्तव्यं ॥ अत्रोच्यते नायं दोषः ॥ आधिकारिकमंडलस्थोक्तेः ॥ आधिकारिको यः सविता मंडलादि
षु विशेषायतनेष्ववस्थितः पर ईश्वरस्तदायत्तैवेयं स्वाराज्यप्राप्तिरुच्यते ॥ यत्कारणमनंतरमाप्नोति मनसस्पतिमि
त्याह ॥ यो हि सर्वमनसां पतिः पूर्वसिद्ध ईश्वरस्तं प्राप्नोतीत्येतदुक्तं भवति ॥ तदनुसारेणैव चानंतरं वाक्पतिश्चक्षुष्पतिः श्रो
त्रपतिर्विज्ञानपतिश्च भवतीत्याह ॥ एवमन्यत्रापि यथासंभवं नित्यसिद्धेश्वरायत्तमेवेतरेषामैश्वर्यं योजयितव्यं ॥ १९ ॥ राम॰ ५२९

प्रचोदयादिति श्रुतेः ॥ तथा च यदि पूर्वं निरंकुशं स्वाराज्यमुक्तं स्यात्तर्हि ईश्वरस्याग्रे प्राप्यतां न ब्रूयात् ततो भोगे स्वाराज्यं न जगज्जन्मादिष्विति
भावः वाक्पतित्वादिकमपीश्वराधीनमित्याह तदनुसारेणेति ॥ उक्तं न्यायं कामचारादिवाक्येष्वतिदिशत्येवमिति ॥ १९ ॥ ॥

जगद्व्यापारस्तु उपासकप्राप्यः तदुपास्यनिष्ठत्वात्संकल्पसिद्ध्यादिवदित्याशंक्योपास्यस्य निर्गुणस्वरूपे व्यभिचारमाह॥ विकारावर्त्ति चेति॥१९॥ नि-
र्गुणस्वरूपे प्रमाणमाह॥ दर्शयतश्चेति॥ यथाऽज्ञानाभावान्निर्गुणं न प्राप्तं तथा ध्यानाभावाज्जगत्स्रष्टृत्वादि न प्राप्यते ध्यानाभावश्च विध्यभावादिति

विकारावर्त्ति च तथा हि स्थितिमाह॥१९॥ विकारावर्त्यपि च नित्यमुक्तं पारमेश्वरं रूपमस्ति न केवलं विकारमात्रगोचरं सवि-
तृमंडलाद्यधिष्ठानं॥ तथा हि॥ अस्य द्विरूपां स्थितिमाह॥ तावानस्य महिमा ततो ज्यायांश्च पूरुषः॥ पादोऽस्य सर्वा भूतानि त्रिपा-
दस्यामृतं दिवीत्येवमादिः॥ न च तन्निर्विकारं रूपमितरालंबनाः प्राप्नुवंतीति शक्यं वक्तुं॥ अतत्क्रतुत्वात्तेषामतश्च यथैव द्विरूपे पर-
मेश्वरे निर्गुणं रूपमनवाप्य सगुण एवावतिष्ठंते॥ एवं सगुणेऽपि निरवग्रहमैश्वर्यमनवाप्य सावग्रह एवावतिष्ठंत इति द्रष्टव्यं॥१९॥
दर्शयतश्चैवं प्रत्यक्षानुमाने॥२०॥ दर्शयतश्च विकाराऽवर्त्तित्वं परस्य ज्योतिषः श्रुतिस्मृती॥ न तत्र सूर्यो भाति न चंद्रतारकं नेमा विद्युतो
भांति कुतोऽयमग्निरिति॥ न तद्भासयते सूर्यो न शशांको न पावक इति च॥ तदेवं विकारावर्त्तित्वं परस्य ज्योतिषः प्रसिद्धमित्यभिप्रायः
॥२०॥ भोगमात्रसाम्यलिंगाच्च॥२१॥ इतश्च न निरंकुशं विकारालंबनानामैश्वर्यं॥ यस्माद्भोगमात्रमेवैषामनादिसिद्धेनेश्वरेण समा-
नमिति श्रूयते॥ तमाहापो वै खलु मीयंते लोकोऽसाविति॥ यथैतां देवतां सर्वाणि भूतान्यवंत्येवं हैवंविदं सर्वाणि भूतान्यवंति॥ तेनो
एतस्यै देवतायै सायुज्यं सलोकतां जयतीत्यादिभेदव्यपदेशलिंगेभ्यः॥२१॥ नन्वेवं सति सातिशयत्वादंतवत्त्वमैश्वर्यस्य स्यात्त-
तश्चैषामावृत्तिः प्रसज्येतेति॥ अत उत्तरं भगवान्बादरायण आचार्यः पठति॥

भावः॥२०॥ तमुपासकं ब्रह्मलोकगतमाह हिरण्यग॥
खल्विमा आपो अमृतरूपा मीयंते भुज्यंते न वाप्यसौ लोकोऽमृतोदकलक्षण इत्यर्थः॥ श्रुत्यंतरमाह॥ यथेति॥ भोगसाम्ये दृष्टांतो यथेत्यर्थः॥
तेनो इत्युशब्दोऽप्यर्थः सलोकतामपीत्यन्वयः सायुज्यं समानदेहत्वं क्रमेण मुक्तिर्वा॥२१॥

...तिं मंगलसूत्रकारं पूजयति॥ भगवानिति॥ भगवंस्त्वं सर्वज्ञस्त्वं सूत्रद्वारा शिष्याणामाचारस्थापनात् आचार्यत्वं॥ बादरायणपदेन बद-
...नवा...वतारिणः सर्वज्ञस्य परमगुरोर्नारायणस्य प्रसादद्योतनात्तत्प्रणीतशास्त्रे निरवद्यत्वं द्योतयति॥ सगुणविद्यायाः सातिशयफलत्वे
तन्नतो निर्गुणविद्यया नावृत्तिरित्याह॥ अनावृत्तिः शब्दादनावृत्तिः शब्दात् ये ब्रह्मलोकं गच्छंति तं प्राप्य नावर्तन्त इति संबंधः॥ लोकं विशिनष्टि
यस्मिन्निति इतोस्मात्पृथिवीलोकात् तृतीयस्यां दिवि यो ब्रह्मलोकस्तस्मिन्नर इति ण्य इति चार्णवौ तत्सोमसुधाहृदौ ऐरमन्नमयं मदीयं मद-

अ॰ पा॰ ४ ४

अनावृत्तिः शब्दादनावृत्तिः शब्दात्॥२२॥ नाडीरश्मिसमन्वितेनार्चिरादिपर्वणा देवयानेन पथा ये ब्रह्मलोकं शास्त्रोक्तविशे-
षणं गच्छंति॥ यस्मिन्नरश्च ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि यस्मिन्नैरं मदीयं सरो यस्मिन्नश्वत्थः सोमसवनो यस्मि-
न्नपराजिता पूर् ब्रह्मणो यस्मिंश्च प्रभुविमितं हिरण्मयं वेश्म यश्चानेकधा मंत्रार्थवादादिप्रदेशेषु प्रपंच्यते ते तं प्राप्य न च-
न्द्रलोकादिवद्भुक्तभोगा आवर्तंते॥ कुतः तयोर्ध्वमायन्नमृतत्वमेति तेषां न पुनरावृत्तिरेतेन प्रतिपद्यमाना इमं मानवमा-
वर्तं नावर्तंते ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तत इत्यादिशब्देभ्यः॥ अंतवत्त्वेपि त्वैश्वर्यस्य यथानावृत्तिस्तथा वर्णितं का-
र्यात्यये तदध्यक्षेण सहातः परमित्यत्र॥ सम्यग्दर्शनविध्वस्ततमसां तु नित्यसिद्धनिर्वाणपरायणानां सिद्धैवानावृत्तिः॥९

करं सरः सोमसवनः अमृतवर्षी॥ यद्यपि तेषामिह न पुनरावृत्तिरिमं मानवमिति च श्रुतिष्विहेममिति विशेषणादस्मिन्कल्पे ब्रह्मलोकं गतानां
कल्पांतर आवृत्तिर्भाति तथापीश्वरोपास्तिं विना पंचाग्निविद्याश्वमेधदृढब्रह्मचर्यादिसाधनैर्ये गतास्तेषां तत्त्वज्ञाननियमाभावादावृत्तिः स्या-
त् ये तु दहराद्यीश्वरोपास्त्या गतास्तेषां सगुणविद्याफलक्षयेपि निरवग्रहेश्वरानुग्रहलब्धात्मज्ञानान्मुक्तिनियम इत्यभिप्रेत्याह॥ अंतवत्त्वे-
पि त्विति॥ नन्वत्र सूत्रकृता सगुणविदामेवानावृत्तिरुक्ता न निर्गुणविदां तत्र को हेतुरित्याशंक्य तेषामावृत्तिशंकाभावादित्याह॥ सम्यगिति॥९

रत्न॰ ४२०

तदाश्रयणेनेति सगुणविदामावृत्तिप्राप्तौ सम्यग्दर्शनाश्रयणेनैवानावृत्तिः साधिता अतः स्वतन्त्रसम्यग्दर्शिनामावृत्तिशंकानेति किमु वा-
च्यमित्यर्थः यत्राध्यायसमाप्तिस्तत्र पदमात्रस्याभ्यासो दर्शित इह सूत्रस्यैवाभ्यासाच्छास्त्रसमाप्तिर्द्योत्यत इत्याह ॥ अनावृत्तिः शब्दादिति ॥
एवं समन्वयोक्त्या ब्रह्मात्मैक्यस्य वेदांतप्रमाणकत्वमवधारितं वाक्यार्थज्ञाने स्मृतितर्कादिसर्वप्रकारविरोधः परिहृतः साधनसंपत्ति-
र्दर्शिता तस्माद्विवेकादिसाधनसंपन्नस्य श्रवणाद्यावृत्तिनिरस्तसमस्तप्रतिबंधस्याखंडात्मसंबोधात्समूलबंधध्वंसे सत्याविर्भूतनिष्क-
लंकानंतस्वप्रकाशचिदानंदात्मनावस्थानमिति सिद्धं ॥२२॥ नानाविधग्रंथजातं वीक्ष्य सम्यग्यथामति ॥ शारीरकस्य भाष्यस्य कृता व्याख्या

तदाश्रयणेनैव हि सगुणशरणानामप्यनावृत्तिसिद्धिरिति ॥ अनावृत्तिः शब्दादनावृत्तिः शब्दादिति सूत्राभ्यासः शास्त्रपरिस-
[illegible] द्योतयति ॥२२॥७॥ इति श्रीमच्छारीरकमीमांसाभाष्ये श्रीमच्छंकरभगवत्पादकृतौ चतुर्थस्याध्यायस्य चतुर्थः पादः समाप्तः
॥ अध्यायश्चतुर्थः ॥ अधिकरणे ॥१९२॥ समग्रग्रंथः सूत्राणां २०० भाष्य ९५०० रामानंदी १९७०० ॥ ॥

॥मुद ॥१॥ अंतर्यामी जगत्साक्षी सर्वकर्ता रघूद्वहः ॥ अतोऽत्र दोषो ऽशंकः स्यादेषह्येवेति शासनात् ॥२॥ वक्षस्यक्ष्णोऽस्य पार्श्वे करतलयुग-
कौस्तुभाभां दधानां च सीतां कोदंडदीक्षामभयवरयुतां वीक्ष्य रामांगसंगः ॥ स्वस्याः कस्मादिनीयं हृदि कृतमनना भाष्यरत्नप्रभाख्या स्वात्मा
कृतुष्ट्या रघुवरचरणांभोजयुग्मं प्रपन्ना ॥३॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोपालसरस्वतीपूज्यपादशिष्यश्रीगोविंदानंदभग-
[illegible] शारीरकमीमांसाव्याख्यायां भाष्यरत्नप्रभायां चतुर्थस्याध्यायस्य चतुर्थः पादः समाप्तः ॥४॥ सूत्राणि ५५५ भाष्य ॥१७०॥ टी० ॥ १५० ॥ ॥
[illegible] ग्रंथः सम्यक्प्रयत्नतः श्रीमदमरदासाख्यविदुषा शोधितं मुदा १ श्रीशंकराचार्यकृतं तु भाष्यं रत्नप्रभासंवलितं हि काश्याम् गोवर्द्धनाख्येन तु धीमतेदं

ॐ तत्सत् श्री...

ॐ तत्सत्

इदं शारीरकमीमांसाभाष्यं भाष्यरत्नप्रभाख्यटीकासहितं श्रीमदरुद्रदासाभिधेयेन विदुषा सम्यक् शोधितं श्रीकाशीपुर्य्यां गोवर्द्धनदासाभिधेयेन स्वकीयहरिहरयन्त्रा-कराख्ययन्त्रालये मुद्रितं येषां विमलमतीनामस्यादानेऽभिलाषः स्यात्तैर्षां कुञ्जगली-तिख्यातायाः पण्यवीथिकायाः पश्चिमद्वारस्य समीपे गोवर्द्धनदासपदवाच्यस्य पुस्तकालये संमिलिष्यतीति ॥ ० ॥ श्रीसम्वत् १९४३ मीः माघवदी ७ वाररविजनवरीता० २६

श्रीकृष्णानंद राम समर्थार्पण

ॐ श्रीसद्गुरुसमर्थ ॐ

ॐ तत्सत् ॥

श्रीमद्रामचंद्रप्रभुः

